भगवन् सरस्वन् ये[1] ते तव ऊर्मयो यैरूर्णोषि नभो मेघैश्छादयसि मधु-मन्त उदकवन्तो घृतश्चुतो घृतवन्तः उदकप्रक्षराः तेभिः[2] तैः त्वमस्माकम् अविता तर्पयिता भवेत्येतदाशास्महे[3] ॥ २४ ॥

पञ्चदशस्य द्वितीयः पादः ।

---

तृतीयः पादः ।

विश्वकर्मा सर्वस्य कर्ता तस्यैषा भवति ॥ २५ ॥

---

'विश्वकर्मा' (१६) वक्तव्यः । स कस्मात् । 'सर्वस्य कर्ता' ।

विश्वकर्मा कस्मात् — यदिदं किञ्चिद्भूतं कारिष्यमाणं क्रियमाणं च तस्य सर्वस्य कर्ता । वायुरमकर्मात्सर्वचेष्टानां मध्यमः । स कथं सर्वं करोति । पार्थिवाप्यो धातू तेजसा परिपच्यमानौ वायुर्यदैन विचरन् सर्वभावानुप्रवेशी सर्वमेवमलङ्कारमाचित्यमकृतात्ममि-

स कथं मध्यमः — जगत्करोतीति मध्यमः । विश्वकरणाद्विश्वकर्मा । विज्ञायते हि वैश्वकर्मणं[8] हविरधिकृत्य साकमेधेषु । 'अनेन वैश्वकर्मणो विश्वानि मे कर्माणि कृतान्यासन्निति विश्वकर्मा हि सोऽभवत्' ( मैत्रा० सं० १ । १० । १६ ) इति । भवति चोदकसम्बद्धं मन्त्रलिङ्गं विश्वकर्माणमधिकृत्य वैश्वकर्मणे सूक्ते 'तमिद्गर्भं प्रथमं दध्र आपः' ( ऋ० सं० १० । ८२ । ६ ) इति । विप्रकृति च वैश्वकर्मणं[11] ग्रहमधिकृत्य विज्ञायते हि 'इन्द्रो वै वृत्रमहत्स इमं लोकमभ्यजयदमुं लोकं नाभ्यजयत्स विश्वकर्मा भूत्वाभ-

जयत्'( मैत्रा० सं० ४ । ८ । १० ) इति । तस्यैव महस्य पुरोरुच-मधिकृत्य विज्ञायते ' यचैन्द्रीं वैश्वकर्मणीं विद्यात्तैव गृह्णीयात् ' इति । स एव पञ्चमादिभ्यो लक्षणेभ्यः सर्वस्थानानुभाविवेऽपि सति विशेषतो मध्यम इति मध्यमस्थाने समाम्नातः । ' तस्यैषा भवति '[2] ॥ २५ ॥

---

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् । तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन्पर एकमाहुः ( ऋ० सं० १० । ८२ । २ )॥ विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च संद्रष्टा भूतानां तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वाद्भिः सह संमोदन्ते यत्रैतानि सप्तऋषीणानि[3] ज्योतींषि तेभ्यः[4] पर आदित्यस्तान्येतस्मिन्नेकं भवन्तीत्यधिदैवतमथाध्यात्मं विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च संदर्शयितेन्द्रियाणामेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वान्नेन सह संमोदन्ते यत्रेमानि सप्तऋषीणानीन्द्रियाण्येभ्यः पर आत्मा तान्येतस्मिन्नेकं[5] भवन्तीत्यात्मगतिमाचष्टे तत्रेतिहासमाचक्षते विश्वकर्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवांचकार स आत्मानमप्यन्ततो जुहवांचकार तदभिवादिन्येषर्ग्भवति । य इमा विश्वा[6] भुवनानि जुह्वदिति तस्योत्तरा भूयसे निर्वचनाय ॥ २६ ॥

---

विश्वकर्मा विमना आद्विहाया इति[7] । भौवनस्य विश्वकर्मणः प्रजापतेरार्षम् । अग्नौ वैश्वकर्मणाभ्यां सूक्ताभ्यां षोडशगृहीतं हूयते तत्र विनियोगः ( मैत्रा० सं० ३ ।

विश्वकर्मा

१ क. ख. घ. झ. ट. ठ. ड. °यते हि. २ क. ख. १ ( २५ ); ठ. ड. °वति । इति निरुक्तभाष्ये ४ ध्याये २५ खण्डः. ३ द. सप्तर्षीणानि. ४ द. °तीभ्ये-तेभ्यः. ५ छ. त. द. तान्यस्मि°. ६ क. ख. २(२६); ठ. ड. २. ७ ग. इति¹¹ । भौ°; ठ. ड. विमना इति । भौ°.

३।७॥ २।१०।२)। विश्वकर्मा विमनाः विभूतमनाः विभूतप्रज्ञानः। सर्वत्राप्रतिहतमस्य प्रज्ञानम्। किं प्रज्ञानमेव केवलम्। नेत्युच्यते। आद्विहायाः। अप्यसावात्मना विहायाः। आत्मनापि सर्वप्रकारं

मन्त्रस्याधिदैवतं व्याख्यानम्

महान्। महत्त्वाच्च व्याप्तौ एवं सर्वप्रकारं सर्वस्य जगतः। यत एव च महान् अत एव धाता उत्पादयिता सर्वभूतानाम्। उत्पाद्य च विधाता जीवनस्य। जीवतां च साध्वसाधुषु कर्मसु प्रवर्तमानानां परमोत संदृक् परमः प्रकृष्टः अव्यवधानेन संद्रष्टा सम्यक् प्रविभागेन द्रष्टा। साध्वसाधुप्रविभागदृष्टानां तेषां च भूतानां यानि इष्टानि प्रियाणि तस्य विश्वकर्मणो दैवीं संपदमभिसंपन्नानि। कार्म्यर्थो वा इषिः। यान्यभीप्सितानि तस्य विश्वकर्मणः। मतानि वा अभिमतानि वा। तस्य विश्वकर्मणः नतानि वा प्रह्वीभूतानि तं विश्वकर्माणं प्रति। तत्परिज्ञानश्रद्धोपासनाभावनाप्रक्षपितदुरितानि तेन सहैकीभूतानि विश्वकर्मणा आधिदैविकमात्मानमभिसंपन्नानि। समिषा मदन्ति। इषा उदकेन अद्भिः परिसुताभिः सुसूक्ष्माभिः सह तेन कर्मणा समानम् अविशेषेण मादन्ते। क। यत्र सप्तऋषीन्पर एकमाहुः। यत्रैतानि सर्वैऋषीणानि रसानामाकर्षणानि द्रष्टृणि वा रश्मीन् ज्योतींषि एकं भवन्ति अविभागमुपगच्छन्ति। मण्डले ह्येतेषामविभागः। किं तत्रैव। नेत्युच्यते। यत्र पर एकमाहुः। क च पुनः पर एकमाहुः। मण्डलाधिष्ठातारि योऽसौ यज्ञदानतपसां भोक्ता 'हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णः' (छा० उ० १।६।६) इति विज्ञायते। एकमेव यमाहुर्देवतासतत्त्वविदः। 'इत्यधिदैवतम्'। देवतामधिकृत्य मन्त्रस्य व्याख्यानमधिदैवतम्।

'अथाध्यात्मम्'। आत्मानमधिकृत्य विश्वकर्मणो व्याख्यानमध्यात्मम्। कः पुनरयमात्मा। विज्ञानसतत्त्वमात्रं सविक्षेपविज्ञानप्रसवबीजं यदेकदेशाः

१ ग. घ. ज. ज्ञानं. २ ग. ज. व्याप्नोति. ३ क. ख. घ. झ. ट. 'च' नास्ति; घ. 'एव—म'. ४ ग. ज. संद्रष्टा. ५ क. ख. घ. झ. ट. ठ. ड. यानि यानि°. ६ क. ख. घ. झ. ट. ठ. ड. कान्त्यर्थो. ७ क. ख. घ. ट. ऋषीणां°. ८ ग. ज. °णानि द्र वा; घ. द्रष्टृणि. ९ क. ख. घ. झ. ट. ठ. ड. सर्वत्रि°.

पगतास्तेन सहभूता मोदन्ते निरशनापिपासा नित्यतृप्ता अतीतशोकमोहजरामृत्यव आत्मविद इत्येवमाहुः सतत्त्वदर्शो ब्राह्मणाः। यथा चानुपक्षीणस्वधाशक्तिर्नित्यतृप्तं सर्वभावपरं तत्परं ब्रह्म यदात्मविदः प्रतिपद्यन्ते तथा पुराणसूक्तेऽपि परमेष्ठिन आर्षं मन्त्रो दर्शयति। 'स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास' (ऋ० सं० १०।१२९।२॥ निरु० ७।३) इति। एवं सर्वत्र संभवो यावद्विषयो मन्त्राणां योऽयं इत्युपप्रदर्शनायोभयथा मन्त्रो वर्णितः।

'इत्यात्मगतिमाचष्टे'। अमुना प्रकारेण वर्तमान। एष मन्त्र आत्मगतिमाचष्टे प्रख्यापयति। यथा चेयमात्मगतिवाचिका ऋक् 'तत्र'

विश्वकर्मण आत्मयागे इतिहासः

एतस्मिन्नर्थे 'इतिहासमाचक्षते' आत्मविद इतिवृत्तं परकृत्यर्थवादरूपेण। यः कश्चिदाध्यात्मिक आधिदैविक आधिभौतिको वार्थ आख्यायते दिग्द्युदितार्थावभासनार्थं स इतिहास इत्युच्यते। स पुनरयमितिहासः सर्वप्रकारो नित्यमविवक्षितस्वार्थस्तदर्थप्रतिपत्तृणामुपदेशपरत्वात्। 'विश्वकर्मा ह भौवनः'। यथोदितमिदं वैदिकं कर्म संबन्धदर्शनेन यः सर्वं करोति सर्वात्मकत्वात्सर्वस्य वैश्वकर्मणीमवस्थामात्मन्युन्नीय स यजमानो विश्वकर्मा भुवनानां भूतानामात्मनि होता भूतेषु चात्मानम्। तथाहि विज्ञायते 'हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनि' (शत० ब्रा० १३।७।१।१) इति। तथा च विदुषो दर्शनकृतौ सर्वमेधसंपत्सर्वकर्मसु। विज्ञायते ह्यग्निहोत्रमधिकृत्य 'स यस्सायं जुहोत्यग्निमेव तदनेन सर्वेणादित्ये जुहोत्यग्निमेवेदं सर्वमनु सर्वं तद्यथानेन सकृत्सर्वं तेनेष्ट्वा लोकं जयेत तावद्ध ह प्रातराहुत्या लोकं जयते यस्यैते आहुती न बद्धं यावज्जीवमाप्नोति स हि बहूनि च न बद्धान्येतयोर्देशतयोरन्यतरामनु' इति। न बद्धमित्यनन्तमुच्यते। तदेवं यस्मिन् कस्मि-

विदुषः सर्वकर्मसु सर्वमेधः सम्यग्ज्ञानेन संपद्यते

१ ग. घ. ज. संभवो. २ ठ. ड. °भौतिकमेवार्थं आख्यापयते°. ३ ग. घ. ज. दिग्द्युदि°. ४ क. ख. घ. म. ट. ठ. ड. °कारो हि नि°. ५ ठ. ड. 'ह' नास्ति. ६ क. ख. ध. म. ट. ठ. ड. °कृतः. ७ ग. घ. ज. °सर्द्धया ओर्व नाप्नोति°. ८ ग. घ. ज. °ष निबद्धा°. ९ ग. घ. ज. न विद्ध°.

धिन्मेधे कर्मणि अग्निहोत्रादौ सर्वः सर्वेण सर्वस्मिन् सर्वस्मै सर्वार्थं हुत्वात्मानं सर्वमेव भवतीति समासार्थः। स एव सर्वस्य विदुषः सर्वः सर्वहुद्यज्ञः सर्वमात्माय संपद्यते दर्शनतः। यो हीतरः सर्वमेधो निरूढसंज्ञोऽहीनस्तद्यथा त्रीण्याश्वमेधिकानि पञ्च पौरुषमेधिकानि वाजपेयासोर्यामौ चेति

निरूढसंज्ञात्सर्वमेधादयं सर्वमेधो भिन्नः

तत्र ‘ स आत्मानमप्यन्ततो जुहवांचकार ’ इत्येतदात्महोमस्यैविधानान्नोपपद्यते । दर्शनतस्तु सर्वमुपपद्यते । ‘ सर्वभूतानि विशेषान् सामान्यात्मनि जुहाव पश्यन् सामान्यं चात्मानं विशेषे जुहाव पश्यन् सर्वकर्मसु स्वयमेव ’। अयमात्मयाजीत्युच्यते । यमधिकृत्य पृष्टं ‘ तदाहुः । आत्मयाजी श्रेया ३ न् देवयाजी ३ ( शत० ब्रा० ११ । २ । २ । १३ ) इति ’। यथा चैतदेवमधिदैवविद आत्मवित् श्रेयान्यमधिकृत्य ‘ ‘ विश्वकर्मा विमना आद्विहायाः ’ ’ इतीयमृगाभिगत्या निरुक्ता तस्यैवार्थस्येतिहासोक्तस्याभिवादिनी आभिमुख्येन वादिनी ‘ एषा ऋग्भवति ’। यथा । ‘ य इमा

विदुषः सर्वमेधसंपदस्यामप्यृचि दृश्यते

विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः । स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश ’ ( ऋ० सं० १० । ८१ । १ )॥

अनेकेषां समानप्रयोगदर्शनाधिकारवतां यो नाम कश्चित्। किमिति। एवं न्यसीदत् एवं कर्मण्यङ्गभावमुपजगाम । कथम्। ऋषित्वेन होता द्रव्यगुणकर्मदेवतायाथार्थ्यद्रष्टृत्वेन । विश्वा भुवनानि जुह्वत् सर्वभूतान्यमुना सर्वमेधसंपद्दर्शनप्रक्रमेण जुह्वत् हावयन् । तस्य किमिति । स आशिषा । आशीः प्रार्थना कामः प्रयोगदर्शनहेतुः सर्वमिदमहं स्यामिति । येन प्रेर्यमाणः सर्वकर्मसु सर्वमेधं सर्वप्राप्तये प्रायुङ्क्त द्रविणमिच्छमानः प्रयोगजनितापूर्वफलं सर्वभावमिच्छन् । तत्किं नाप । नेत्युच्यते । आप । कथमिति।

१ ग. ज. ध्विसर्वे क°; च. °ध्विसेधे. २ क. ख. घ. झ. ट. ठ. ड. °मेवं भ°. ३ क. ख. घ. झ. ट. ठ. ड. °इति । स एवद्वा°. ४ क. ख. घ. च. झ. ट. ठ. ड. °मस्य वि°. ५ ग. जः °द्यते । भूना°. ६ ग. यथा°व°. ७ क. ख. च. ज. घ. झ. ट. °जुहवदिति । अने°; ग. जुह्वदिति । अने°. ८ ग. च. ज. °भव्यमु°. ९ क. ख. घ. ट. ठ. ड. अहावयत्; ग. ज. हावयत्; झ. ‘हावयन्’ नास्ति. १० ग. च. ज. °त्किमाप. २१

प्रथमच्छत् । प्रथमोऽप्रजत्वात् । प्रजापतिभावेन मुख्यस्य छादयिता यतः संपेदे तथा सन् अवरान् पश्चादुत्पन्नानस्मदादीन् विशेषान् आविवेश व्याप्तवान् व्याप । यस्यैवं प्रयोगफलयोर्वृत्तिः स नः पिता जनिता सोऽस्माकं पिता पाता रक्षिता चेत्येवं विजानीमः । अतस्ताद्व्यमश्नुवीमहीति ।

यथा चैतदेवं नान्यथेति तयेयम् ' उत्तरा ऋग्भूयसे ' यहुतराय ' निर्वचनाय ' ॥ २६ ॥

---

विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् । मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ( ऋ० सं० १० । ८१ । ६ ) ॥ विश्वकर्मन्हविषा वर्धयमानः स्वयं यजस्व पृथिवीं च दिवं च मुह्यन्त्वन्ये अभितो जनाः सपत्ना इहास्माकं मघवा सूरिरस्तु प्रज्ञाता तार्क्ष्यस्त्वष्ट्रा व्याख्यातस्तीर्णेऽन्तरिक्षे क्षियति तूर्णमर्थं रक्षत्यश्नोतेर्वा तस्यैषा भवति ॥ २७ ॥

---

विश्वकर्मन्हविषा वावृधान इति । प्रयोगावस्थां फलावस्थां च विश्वकर्मणः प्रतीत्योच्यते । हे विश्वकर्मन् प्रयोगावस्थित त्वमुच्यसे । अनेन हविषा सर्वमेधदर्शनसंपदादियुक्तेन त्वं वर्धमानो विश्वकर्मत्वमापद्यमानस्तत्फलविपरिणामकाले स्वयं यजस्व स्वयं संगच्छस्व व्याप्नुहि पृथिवीं च दिवं च । सर्वव्यापी भव । अपि च । तथैवेतस्मिन् दर्शनकृते महिम्नि मुह्यन्त्वन्ये अभितो जनासः । मोहमुपगच्छन्तु अभितः सर्वतस्ते जना ये त्वदुपासनापराङ्मुखास्तव सपत्नाः समानं पतित्वमिच्छन्ति ।

विश्वकर्मदेवता अन्या ऋक्

१ ग. च. ज. मुख्यच्छाद°. २ क. ख. घ. ङ. ट. ठ. ड. पाता जनयिता ए°. ३ क. ख. २ ( २६ ); ठ. ड. °नाय । इति निरुक्तभाष्ये चतुर्थाध्याये षड्विंशतिः ( ठ. २६ ) खण्डः; इतोऽग्रे नास्ति. ४ छ. त. द. जनासः. ५ क. ख. छ. त. द. तीर्णे अन्त°. ६ क. ख. ३ (२७); त. द. ३. ७ ट. ड. हविषेति । प्रयो°. ८ ग. इति । प्र°. ९ क. ख. घ. ङ. ट. तथैतस्मिन्. १० ग. च. ज. °पराङ्मुख°. ११ क. ख. घ. ङ. ट. ठ. ड. °नाः समानम्.

अथ पुनः इह त्वदर्शनोपासनाकर्मणि वर्तमानानां भवे मघवा सर्वधनेशानः । सूरिः मेधावी सर्वत्राप्रतिहतप्रज्ञानः प्रज्ञाता विशेषतोऽस्माकम-स्त्वित्येतदाशास्महे ।

त्वष्टा विश्वकर्मेत्यधिभूतप्रधानाः पुराणविदः । तथापि कल्पार्के-शब्दादिसर्वज्ञानहेतुको नामप्रतिलम्भ इत्यविप्रतिपिद्धम् । एवं, सर्वासु देवतासु ।

'तार्क्ष्यः' (१७) इति वक्तव्यम् । स पुनरेष 'त्वष्टा व्याख्यातः' ।

**तार्क्ष्यः कस्मात्**

तद्यथा । 'तूर्णमश्नुते' इत्येवमादि (निरु० ८ । १३) । अथवा 'तीर्णे अन्तरिक्षे' सर्वतो गते 'क्षियति' निवसति । अथवा । 'तूर्णम्' उदकास्यं 'रक्षत्यश्नुते वा'। अर्थविकल्पेन तूर्णशब्दात्पूर्वपदं रक्षतेरश्नोतेर्वोत्तरपदम् । 'तस्यैषा भवति' ॥ २७ ॥

---

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् । अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम (ऋ० सं० १० । १७८ । १) ॥ तं भृशमन्नवन्तं जूतिर्गतिः प्रीतिर्वा देवजूतं देवगतं देवप्रीतं वा सहस्वन्तं तारयितारं रथानामरिष्टनेमिं पृतनाजितमाशुं स्वस्तये तार्क्ष्यमिह ह्वयेमेति कमन्यं मध्यमादेवमवक्ष्यत्-त्यैषापरा भवति ॥ २८ ॥

---

**तार्क्ष्यः**

त्यमू षु वाजिनमिति । अरिष्टनेमेरार्षम् । विपुवति निष्केवल्ये शस्यते । 'सद्यश्चित्' (ऋ० सं० १० । १७८ । ३) इति च । यस्तार्क्ष्यो वाजी वेजनान् भयदाता वा परेभ्यो बलवान् वा तं देवजूतं देवैर्गतं परत्वेन ज्ञातं वा परोऽयमस्माकमिति । देवप्रीतं देवैर्वा समानप्रीतम् । सहावानं सहो

---

१ ग. घ. ज. भंश. २ क. ख. ३ (२७); ठ. ढ. °ति । इति निरुक्तभाष्ये उत्तरषट्के चतुर्थाध्याये (ठ. ४ ध्याये) २७ खण्डः; ग. घ. पर्जमितोऽग्रहो नास्ति. ३ ठ. ढ. °बक्षत्त°. ४ क. ख. ४ (२८); ठ. ढ. ४. ५ ग. °मिति । अ°. ६ क. ख. घ. ङ. ट. ठ. ढ. 'वा' नास्ति.

वलं तेन तद्वन्तम् । एतदेव मध्यमलिङ्गम् । तरुतारं तारयितारं रथानां रंहितॄणां भूतानाम् । गतिमतां गमयितारमित्यर्थो बलहेतुकत्वाद्गमनस्य ।' तमेवमादिगुणयुक्तम् अरिष्टनेमिं केनचिदप्यप्रतिहतवज्रप्रहरणम् । नेमिरिति वज्रनाम । पृतनानां जेतारम् । आशुं शीघ्रं स्वस्तये आत्मनः स्वस्त्ययनाय सुपुं वयमेतस्मिन्कर्मण्याह्वयामहे ।

' तस्यैषा परा भवति '। सा पुनः किमर्थम् । बलकृतिरुपप्रदर्शिता। वर्षकर्मोपप्रदर्शतेऽनया । सत्यामपि हि वलकृतौ पक्षिराजे गरुत्मनि संदेहोऽसावपि बलवांश्च तार्क्ष्यनामा च । वर्षकर्म त्वसमानं तेनास्य । अतश्चोक्तमेतदेव विचारास्पदमपेक्ष्य ' कमन्यं मध्यमादेवमवक्ष्यत् ' इति॥२८॥

---

सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान । सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम् (ऋ० सं० १० । १७८ । ३ ) ॥ सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसानिनी शतसानिन्यस्य सा गतिर्न स्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुं मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा मन्यन्त्यस्मादिषवस्तस्यैषा भवति ॥ २९ ॥

---

सद्यश्चिद्यः शवसा पञ्च कृष्टीरिति । सद्योऽपि यस्तार्क्ष्यो बलेन तनोत्यपो वर्षभावेन । ' सद्यः 'शब्दो लक्षणार्थोऽस्य ईवः तार्क्ष्य एव परस्य: परस्परारि चेति । ' चित् ' इत्यप्यर्थे । न कदाचिदप्यन्यः सर्वदा तार्क्ष्य एवेति ! कं प्रत्यप्रस्तनोति । पञ्च कृष्टीः

१ ग. घ. ज. °वक्षत्. २ क. ख. ४ ( २८ ); ठ. 'इति । इति निरुक्तभाष्ये ३ ध्याये २८ खण्ड°; ड. °इति । इति निरुक्तटीकायामुत्तरषट्के चतुर्थाध्याये १८ खण्डः, ग. घ वर्गमितरेष्वङ्को नास्ति. ३ छ. त. द. 'वधकर्मणो' नास्ति. ४ क. ख. मन्यु त्वस्मा°; छ. त. द.-ठ. ढ. मन्युंत्यस्मा°. ५ क. ख. ५ ( २१ ); त. द ५. ६ ठ. ढ. °श्चिद इति. ७ ग. 'रिति । स°. ८ ग. ज.

 स्वः वयः स्वः पत्पा°; घ. स्वः वयपत्र°. ९ क. ख. घ. ठ. ढ. किं.

पञ्च मनुष्यजातानि प्रति ब्राह्मणप्रमुखान्निषादपञ्चमान्वर्णान्प्रति । तदनुग्रहपूर्वकत्वात्सर्वलोकानुग्रहस्य कृष्टिग्रहणेन तद्विवक्षा । कथम् । सूर्य इव ज्योतिषा । यथा सूर्यो ज्योतिः प्रकाशं लोकानुग्रहाय तनोति तथा तार्क्ष्यो अपस्तनोति । यथा हविषा विधेमेति नम्यते तत्र कस्मै देवायेति संप्रदानश्रुतेः संप्रदानवैधुर्याय ( निरु० १० । २३ ) एवमिहाप्युपमानो प्रमेयकारकसम्बन्धवैधुर्याय ज्योतिरिति नम्यते । कस्मात्पुनरयमपस्तततेति । इतो यस्मात् सहस्रसाः शतसा अस्य रंहिः । बहूश्च बहुशश्च प्रकारान्मेघविदारणाय भजते अस्य तार्क्ष्यस्य रंहिः गतिः । अपि च । एवमसह्यास्य गतिः न स्मा वरन्ते नैव एताम् अस्य वारयन्ति न प्रति बद्धुं शक्नुवन्ति केचनातिवेगवत्त्वात् । कथम् । युवतिं न शर्याम् । अतिबलवता धनुष्मता मुक्तां शरमयीमिषुम् । अन्येन वान्येन वाकाशप्रदेशेन प्रतिनिश्रयन्तीमात्मानम् । य एवमादिगुणयुक्तस्तार्क्ष्यः स इद नामास्माकं करोत्विति ।

'मन्यु' ( १८ ) मन्यतेः' क्रोधार्थस्य दीप्त्यर्थस्य वा । मन्युः कस्मात् ? उभयमप्युपपद्यते बलवत्त्वान्मध्यमस्य । तस्यैषा भवति ॥ २९ ॥

---

त्वया मन्यो सरथमारुजन्तो हर्षमाणासो धृषिता मरुत्वः । तिग्मेषव आयुधा संशिशाना अभि प्र यन्तु नरो अग्निरूपाः ( ऋ० सं० १० । ८४ । १ ) ॥ त्वया मन्यो सरथमारुह्य रुजन्तो हर्षमाणासोऽधृषिता मरुत्वस्तिग्मेषव आयुधानि संशिश्यमाना अभिप्रयन्तु नरो अग्निरूपा अग्निकर्माणः संनद्धाः कवचिन इति वा दधिक्रा व्याख्यातस्तस्यैषा भवति ॥ ३० ॥

---

१ घ. °भिलद्वेपश्च°. २ ग. ज. घान्ये. ३ ग ज. घाश°. ४ घ. म. ट. ठ. ड. दधिक्र°. ५ क. ख. ५ (१९), ठ. ट. °वति । इति निरुक्ते टीकायामुत्तरषट्के चतुर्थाध्याये ( ठ. ४ ध्याये ) ११ खण्डः; ग घ. ईषेमितेत्यङ्को नास्ति. ६ क. ख. ६ (२०), ठ. ट. ६.

त्वया मन्यो सरथमारुजन्त इति। तपसः पुत्रो मन्युर्नाम तस्यार्षम्। श्येनाजिरादिषु निष्केवल्ये विनियोगः ( आश्व० श्रौ० ९।८)। हे भगवन् मन्यो त्वया सरथमेकमेव त्वया सह रथं समारुह्य रुजन्तः परान् भञ्जन्तः अभिभवन्तः हर्षमाणासः तवाश्रयादविकला हृष्यन्तः अधृषिताः अनाधर्षिताः परैः अपि च हे मरुत्वः तिग्मेषव एते अस्मद्योधा आयुधा आयुधानि संशिशानाः तीक्ष्णानाभिपूर्णामायुधाला च योऽर्थस्तमनुतिष्ठन्तः। भिन्दन्त इषुभिश्छिन्दन्त आयुधैः। अमुना प्रकारेणैते नरा अस्मन्मनुष्या योधा अग्निरूपा अग्निकर्माणः अग्नय इवैते सेनामभिभवन्तो यन्त्विति।

मन्युः

"दधिक्राः" (१९) इति वक्तव्यम्। स "व्याख्यातः" (निरु० २।२७)। "दधत्क्रामति" इत्येवमादि सर्वं मध्यमे योज्यम्। "तस्यैषा भवति ॥ ३० ॥

---

आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान। सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि (ऋ० सं० ४।३८।१०) ॥ आतनोति दधिक्राः शवसा बलेनापः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसाः शतसा वाजी वेजनवानर्वेरणवान्संपृणक्तु नो मधुनोदकेन वचनानीमानीति मधु धमतेर्विपरीतस्य सविता सर्वस्य प्रसविता तस्यैषा भवति ॥ ३१ ॥

---

आ दधिक्राः शवसा पञ्च कृष्टीरिति। वामदेवस्यार्षम्। आतनोति सर्वतस्तनोति। कोऽसाविति। दधिक्राः। केन। शवसा बलेन। किमातनोति। अपः। क। पञ्च कृष्टीः पञ्च मनुष्यजातानि प्रति। कथम्। सूर्य इव ज्योतिषा।

दधिक्राः

---

१ ठ. ड. मन्यो इति. २ ग. हनि। त°. ३ ग. ज. भजन्तः हर्ष°; ख. ठ. ड. रुजन्तः हर्ष°. ४ ग. घ. ज. तवाश्रया°. ५ क. ख. ६ (३०) ठ. °वति। इति निरुक्तटीकायामुत्तरषट्के ४ ध्याये २० खण्डः; ड. °वति। इति निरुक्तभाष्ये २० खण्डः. ६ क. ख. ७ (३१); न द्. ". ७ ठ. ड. दधिका इति ८ ग. °रिति° । शा°.

सहस्रसाः शतसाः बहूनां बहुतराणां चोदकानां संभक्ता वाजी वेजनवान् अर्वा ईरणवान् उदकेरणक्रियायोगी । य एवमादिगुणयुक्तो दधिक्राः सोऽस्माकम् इमानि स्तुतिवाक्यानि स्तुतिलक्षणानि वचांसि संपृणक्तु मध्वा मधुना उदकेन । ' मधु धमतेः ' आद्यन्त'विपरीतस्य ' । उदकं स्तुत्यनन्तरमेव ददात्वित्यर्थः । बलकृतिर्वर्षकर्म चोभयमप्यस्ति तस्मान्मध्यमः ।

' सविता (२०) व्याख्यातः ' ' इममेवाग्निं सवितारमाह ' ( निरु० ७ । ३१ ) इत्यत्र । स पुनरिह वर्षकर्मयोगान्मध्यमः । तस्यैषा भवति ॥ ३१ ॥

---

सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् । अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्तं बद्धं सविता समुद्रम् ( ऋ० सं० १० । १४९ । १ ) ॥ सविता यन्त्रैः पृथिवीमरमयदनारम्भणेऽन्तरिक्षे सविता द्यामदृंहदश्वमिवाधुक्षद्धुनिमन्तरिक्षे मेघं बद्धमतूर्तं बद्धमतूर्णं इति वा त्वरमाण इति वा सविता समुदितारमिति कमन्यं मध्यमादेवमवक्ष्यदादित्योऽपि सवितोच्यते तथा च हैरण्यस्तूपे स्तुतोऽर्चन्हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच तदभिवादिन्येषर्ग्भवति ॥ ३२ ॥

---

सविता यन्त्रैः पृथिवीमरम्णादिति । अर्चन्नामा हैरण्यस्तूप ऋषिरुत्तरा-

सविता याश्च- । सविता मध्यमः सर्वबलेशानः । किमिति । यन्त्रैः पृथिवीमरम्णात् । यावत्किंचिद्यन्त्र्यते तत्सर्वं बलेनैव । यन्त्रिता चेयं पृथिवी निश्चला । न चान्य इन्द्राद्बलवान्यन्त्रयितास्ति । तस्मादिन्द्र एवेमां संयच्छन् स्थिरामकरोत् । ' रम्णातिः संयमनकर्मा ' ( निरु० १० । ९ ) इत्युक्तम् । अथवा । वर्षेणोपकारेण पृथिवीलोकनिवासिनो धारयति । तदस्याः संयमनम् । किमेतावदेव । नेत्युच्यते । अस्कम्भने सविता द्यामदृंहत् । एवमप्येतस्मिन्

---

१ क. ख. ७ (३१), ठ. ढ °वति । इति निरुक्तभाष्ये चतुर्थाध्या० ( ठ. ४ ध्याये ) ३१ खण्डः; घ. ज. धर्ममिनेऽवद्धो नास्ति. २ छ. त. °नारम्भणेऽन्त°, द. °नालम्बनेऽन्त°. ३ छ. त. द. °यक्षद्धा°. ४ क. ख. ८ ( ३२ ), त. द. ८. ५ ठ. ढ. यन्त्रैरिति. ६ ग. °दिति । अ°. ७ ग घ. ज. आङ्गिरस ऋ°. ८ ग. घ. ज. °यच्छते. ९ ठ. ढ. कर्षे°; ठ. ढ. कर्षणेन°.

अस्कम्भने अनारम्भणे अमूर्तेऽन्तरिक्षे यत्र पर्णमपि नाऽलमवस्थानाय तत्रैवमप्यतिगुर्वी सौवर्णी द्यां सविता एव अदृंहत् स्थिरामकरोत् आभूतसंप्लवात्। को हि नाम मध्यमात्सवितुरन्य एतदतिदुष्करं कुर्यात् । अपि च । अश्वमिवाधुक्षत् । यथाश्वबन्धोऽश्वं धूनुयादुपावृत्तमनायासेन रजस्तस्मादपनेष्यन्नेवं धुनि समुद्रम् उदकबन्धितारं मेघम् अधुक्षत् सविता अधूनोत् अकम्पयत् उदकप्रक्षरणाय । क बद्धम् । अतूर्ते एतस्मिन्नन्तरिक्षे अहिंसिते । अत्वरमाणे वा सर्वगतत्वात् । आकाशे गमनायायोग्ये वा । वाय्वात्मनैव विष्टभ्य निश्चेष्टं बद्धमिवाधुक्षद्यः सविता सोऽस्माकमिदं नाम करोत्विति । समुदिता समुद्रो भवः ।

' कमन्यं मध्यमादेवमवक्ष्यत् ' मेघमधूनोदिति । कुतः संशयः । अन्योऽपि यस्मान्मध्यमात्सवितोच्यते । यत आह ।

अथ सविता मध्यम एव

' आदित्योऽपि सवितोच्यते ' इति । यथा चैतदेव ' तथा ' एतस्मिन्नेव ' हैरण्यस्तूपे ' सूक्ते स्तवः हैरण्यस्तूपमिदं सूक्तमिति । कुत एतत् । अत आह ।

इदं हैरण्यस्तूपे सूक्ते स्पष्टम्

' अर्चन् हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच ' इति । अर्चन्नन्त्रा हिरण्यस्तूपस्तद्रूप तद्व्रतो वा। स यथैतत्सूक्तं प्रोवाच ' तदभिवादिन्येषर्भवति ' अस्मिन्नेव सूक्ते ॥ ३२ ॥

---

हिरण्यस्तूपः सवितर्यथा त्वाङ्गिरसो जुह्वे वाजे अस्मिन्। एवा त्वार्चन्नवसे वन्दमानः सोमस्येवांशुं प्रति जागराहम् ( ऋ० सं० १० । १४९ । ५) ॥ हिरण्यस्तूपो हिरण्मयः स्तूपो हिरण्मयः स्तूपोऽस्येति वा स्तूपः स्त्यायतेः संघातः सवितर्यथा त्वाङ्गिरसो जुह्वे वाजेऽन्नेऽस्मिन्नेवं त्वार्चन्नवनाय वन्दमानः सोमस्येवांशुं प्रतिजागर्म्यहं त्वष्टा व्याख्यातस्तस्यैषा भवति॥३३॥

---

१ क. ख. ग. च. ज. ठ. ड. 'प्लवात् २ ग. च. ज. °दुःकरं. ३ च. °दक तारं. ४ क. ख. घ. झ. ट. ठ. ड. अधूनो'; च. अधुनाद्°. ५ ग घ. ज. °वक्षन्मे'. ६ ग. ज. स्तुनः. ७ ग. ज °न्येव क्राभ°, च. °न्येषा क्राभ°, ८ क. ख. ८ ( ३२ ), ठ. ड. °सूक्ते । इति निरुक्तभाष्ये ४ ध्याये ३२ खण्डः; घ. च. कर्मभिरोत्व°ो नास्ति. ९ क. ख. छ. त. द. वाजे अन्ने अस्मि°. १० क. ११ ख. ९ ( ३३ ), त. द. ९.

सविताऽत्र मध्यमः

हिरण्यस्तूपः[1] सवितर्यथा त्वेति[2] । हे सवितः यथा अन्यकैलीनो[3] हिरण्यस्तूपः त्वामाजुहाव कर्मण्याहूतवान् एवम् अहमप्येतस्मिन्कल्पे हिरण्यस्तूपतामापन्नः अर्चन्नामा अवनाय वाजे अस्मिन् अन्ने संस्कृते हविषि त्वामाहूय वन्दमानः स्तुवन् सोमस्येवांशुं सोममिव क्रीत्वा आदृतः प्रति जागर्मि अनन्यमनास्त्वामायागादुपास इति । 'स्त्यै संघाते' ( धा० १ । ९३५ ) तस्य स्तूप इति ।

'त्वष्टा (२१) व्याख्यातः' ( निरु० ८ । १३ ) । तस्यैषा भवति ॥ ३३ ॥[4]

---

देवस्त्वष्टा॑ सवि॒ता वि॒श्वरू॑पः पु॒पोष॑ प्र॒जाः पु॑रु॒धा ज॑जान ।
इ॒मा च॒ विश्वा॒ भुव॑नान्यस्य म॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ( ऋ० सं० ३ । ५५ । १९ ) ॥ देवस्त्वष्टा सविता सर्वरूपः पोषति प्रजा रसानुप्रदानेन बहुधा चेमा[5] जनयतीमानि च सर्वाणि भूतान्युदकान्यस्य महच्चास्मै देवानामसुरत्वमेकं[6] प्रज्ञावत्त्वं वानवत्त्वं वापि वासुरिति प्रज्ञानामास्यत्यनर्थानस्ताश्चास्यामर्था[7] असुरत्वमादिलुप्तं वातो वातीति सतस्तस्यैषा भवति ॥ ३४ ॥[8]

---

त्वष्टा

देवस्त्वष्टेति[9] । वैश्वामित्रस्य प्रजापतेरार्षम् । वैश्वदेवे विनियोगः । त्वष्टा देवो मध्यमः सविता सर्वस्य भूतग्रामस्य प्रसविता उत्पादयितोदकसंप्रदानद्वारेण । किमुत्पादयितैव । नेत्युच्यते । पुपोष प्रजाः पुष्णाति रसानुत्पाद्य[10] । न केवलं

१ ठ. ड. °स्तूप इति. २ ग. त्वेति° । हे. ३ क. ख. घ. झ. ठ. ड. °न्यका· लीनो; ट. °न्यकालीनो° कल्पी. ४ क. ख ९ ( ३३ ); ठ. ड. °वति । इति निरुक्तभाष्ये ४ ध्याये ३३ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ५ छ. त. द. चेमा. ६ छ. °मेकत्वं प्र°; त. द. °मे कत्वं प्र°. ७ छ. त. °मनर्था. ८ क. ख. १८ ( ३४ ), त. द. १०. ९ ग. °ष्टेति° । वै°. १० क. ख. घ. झ. ट. ठ. ड. °ति चाप्यनुत्पाद्य.

पुष्णाति । किं तर्हि । पुरुवा जजानेति । बहुधा चैनौ जनयति वर्धयति । केन पुनरसौ जनयति पुष्णाति वर्धयति चे । यत आह । इमा च विश्वा भुवनान्यस्य । इमानि विश्वानि भुवनानि उदकानि अस्य यतः स्वतायां वर्तन्ते तस्माज्जनयति पुष्णाति वर्धयति च । अनश्च सर्वमिदं शक्तः कर्तुं यतो महद्देवानामसुरत्वमेकम् । महदसुरत्वम् । असुरिति प्रज्ञानाम । तया तद्वत्त्वम् । तया महत्या प्रज्ञया उदकेन साधनेन सर्वमिदं जनयति पुष्णाति वर्धयति च । अप्रज्ञो हि साधनसंपत्तावपि किं कुर्यात् । अथवा । 'अनवत्त्वम्' । असुः प्राणस्तेन तद्वत्त्वम् । एवमपि सति प्राणेनैव शक्यत एतत्सर्वं कर्तुम् । अप्राणो हि किं कुर्यात् । 'अनवत्त्वम्' इति केचित् । तेषामन्नहेतुनोदकेन तद्वत्त्वम् । तथापि योज्यम् ।

असुरत्वमित्यस्यार्थः

'असुरिति प्रज्ञानाम' । तत्कस्मात् । 'अस्यति अनर्थान्' । प्रज्ञैव हि प्रज्ञावतोऽस्यति क्षिपत्यनर्थान्नाशयति । 'अस्ताश्चास्यामर्थाः' । न हि तदस्ति यैव्यक्तैर्यत्सर्वं प्रज्ञावतां प्रज्ञायां नास्ति । एतावांस्तु विशेषोऽभिव्यक्तमनभिव्यक्तमिति । अथवा । यदेतदसुरत्वं वसुमतो भावो वसुरत्वम् एतत् । रो मत्वर्थे । वकारलोपश्च । वसुना उदकेन तद्वानसौ त्वष्टा ।

'वातः' ( २२ ) कस्मात् । 'वातीति सतः' । 'वा गतिगन्धनयोः' ( धा० २ । ४० ) इत्यस्य । सत इति धातुकारकावधारणम् । वायुशब्दो हि त्रयाणां धातूनां विकल्पेन ( निरु० १० । १ ) । अयं तु वातेरेवेति विशेषः । 'तस्यैषा भवति' ३४ ॥

वातः कस्मात्

---

वात आ वातु भेषजं शंभु मयोभु नो हृदे । प्र ण आयूंषि तारिषत् ( ऋ० सं० १० । १८६ । १ ) ॥ वात आवातु भेष-

---

१ ग. घ. ज. चैनां; ठ. ड. चैमा. २ ग. घ. ज. 'च' नास्ति. ३ घ. ट. ठ. ड. विश्वा० न्यस्य. ४ ष. विश्वा विश्वानि. ५ घ. ट. ठ. ड. 'देवाना० मेकम्. ६ ग. घ. ज. °मनर्थाः. ७ ज. व्यक्तमनभिव्यक्तमिति°. ८ ग. 'प्रज्ञावतां' नास्ति. ९ क. ख. १० ( ३४ ); ट. ड. °वति । इति नैरुक्तभाष्ये चतुर्थाध्याये ( ४ ध्याये ) ३४ खण्डः, ग. च. दुर्गवृत्तिरेतद्वाक्यो नास्ति.

ज्यानि शंभु मयोभु च नो हृदाय प्रवर्धय च न आयुरग्निर्व्या-ख्यातस्तस्यैषा भवति ॥ ३५ ॥

---

' वात आवातु भेषजमिति[3] । दलस्य वातायनस्यार्षम् । वातः अस्मा-

वातः

नाभिमुख्येन भेषजं यद्वत्पथ्यमस्माकं तत्तद्गृही-त्वा आवातु । तच्चास्माकं शंभु अस्तु । शमिति सुखनाम । तद्भावकमस्तु तदात्वे । आयतौ[4] च परिणामे मयोभु अस्तु । मय इति सुखनाम । हृदयाय[5] सुखमस्तु । स्तूयमानः प्रत्यक्षीभूत इव मनसि । यतः प्रत्यक्षमुच्यते[6] । प्र ण आयूंषि तारिषत् । हे भगवन् वायो प्रवर्धय त्वमस्माकमायूंषि सपुत्रपौत्रादिवर्गाणां भैषज्यं च त्वमस्माकं नित्यमावहेत्ये-[7]तदाशास्महे ।

' अग्निः (२३) व्याख्यातः ( निरु० ७ । १४ ) । ' तस्यैषा भवति[8] ' ॥ ३५ ॥

---

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे । मरुद्भिरग्न आ गहि ( ऋ० सं० १ । १९ । १ ) ॥ तं प्रति चारुमध्वरं सोम-पानाय प्रहूयसे सोऽग्ने मरुद्भिः सहागच्छेति कमन्यं मध्यमादेव-मवक्ष्येत्तस्यैषापरा[9] भवति ॥ ३६[10] ॥

---

प्रति त्यम्[11] । मेधातिथिः काण्वः । त्वं तम्[12] अङ्गवैकल्यरहितम् अध्वरं

अग्निः

प्रति हे भगवन्नग्ने त्वमस्माभिः गोपीथाय सोम-पानाय प्रहूयसे[13] आहूयसे । सं[14] त्वमेतज्ज्ञात्वा मरुद्भिः सह आगहि आगच्छेतस्मिन्नस्मत्कर्मणि सोमं पातुमित्येतदाशास्महे ।

---

१ क. ख. ङ. थ. ध. ठ. ढ. प्रवर्धयतु. २ क. ख. ११ ( ३५ ), त. द. ११. ३ ग. °मिति³ । उ°. ४ क. ख. ध. झ. ट. ठ. ढ. °तदात्वे च आयतौ परि°. ५ ग. ज. हृदयसुस्तूय°, च. हृदयसुख°. ६ ग. च. ज. °च्यते. ७ ग. घ. ज. °मावहेत्ये°. ८ क. ख. ११ (३५), ठ. °वति । इति निरुक्तभाष्ये उत्तरखण्डे चतुर्थाध्याये ३५ खण्डः; ड. °वति । इति निरुक्तभाष्ये ३५ खण्डः; ग. घ. वर्जमितरेष्वङ्को नास्ति. ९ छ. त. द. °वक्ष्यत्त°. १० क. ख. १२ (३६), त. द. १२. ११ ग. °त्यं¹¹ । मे°; ठ. ड. त्यमिति. १२ ग. घ. ज. तमध्वरं प्र°. १३ ग. घ. ज. ' प्रहूयसे ' नास्ति. १४ ग. घ. ज ' स त्वं ' नास्ति.

गोपीथाय मरुद्भिः सहेति मध्यमं लिङ्गम् । 'तस्यैषापरा भवति'। सा पुनः किमर्थम् । गोपीथायेत्यव्यक्तं सोमपानम् । व्यक्तसोमपानलिङ्गोत्तरा । तद्यथा ॥ ३६ ॥

---

अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आ गहि ( ऋ० सं० १ । १९ । ९ ) ॥ अभिसृजामि त्वा पूर्वपीतये पूर्वपानाय सोम्यं मधु सोममयं सोऽग्ने मरुद्भिः सहागच्छेति ॥ ३७ ॥

दशमाध्यायस्य तृतीयः पादः ॥

---

अभि त्वा पूर्वपीतय इति । हे भगवन्नग्ने पूर्वकाले प्रवृत्ताय पानाय अग्निरेव त्वाम् अभिसृजामि वदे । किमिति । इदं सोम्यं मधु सोममयं तन्मधु । स त्वमागच्छैतस्मिन्कर्मण्येतत्पातुमित्येतदाशास्महे ॥ ३७ ॥

---

पञ्चदशस्य तृतीयः पादः ।

---

चतुर्थः पादः ।

धेनो धेनतेः कान्तिकर्मणस्तस्यैषा भवति ॥ ३८ ॥

---

१ ग. घ. ज. मध्यमलिङ्ग. २ क. ख. १२ (३६), ङ. °तद्यथा । इति निरुक्तभाष्ये चतु० ३६ खण्डः; ग. घ. चर्ममितरंशो नास्ति. ३ क. ख. १३ (३७), त. द. १३. ४ ङ. च. ध. 'दश ०० पादः' नास्ति; त. दशमे तृती०; छ. द तृतीयः. ५ ग. इति" । हे". ६ ग. घ. ज. 'अग्ने त्वामभिसृ". ७ ग. घ. ज. °वदे इद°. ८ ग. ज. स त्वमस्मादाग"; घ. तत्त्वमस्मदाग°. ९ ग. घ. ज. °र्मणि तत्पा°. १० क. ख. १३ (३७), ठ. ङ. °रमे इति पञ्चदशस्य ( ठ. पञ्चमाध्यायस्य ) तृतीयः पादः । इति निरुक्तभाष्ये ३७ खण्डः; ग. घ. चर्ममितरंशो नास्ति. ११ क. ख. १ (३८), त. द. १.

'वेनः' (२४) इति वक्तव्यम् । स एव 'वेनतेः कान्तिकर्मणः' ।

वेनः कस्मात् — सर्वलोककान्तो हि मध्यमः सर्वस्योपकारित्वात् । 'तस्यैषा भवति' ॥ ३८ ॥

---

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने । इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति (ऋ० सं० १० । १२३ । १ ) ॥ अयं वेनश्चोदयत्पृश्निगर्भाः प्राष्टवर्णगर्भा आप इति वा ज्योतिर्जरायुर्ज्योतिरस्य जरायुस्थानीयं भवति जरायुर्जरया गर्भस्य जरया यूयत इति येममपां च संगमने सूर्यस्य च शिशुमिव विप्रा मतिभी रिहन्ति लिहन्ति स्तुवन्ति वर्धयन्ति पूजयन्तीति वा शिशुः शंसनीयो भवति शिशीतेर्वा स्याद्दानकर्मणश्चिरलब्धो गर्भो भवत्यसुनीतिरसूञ्चयति तस्यैषा भवति ॥ ३९ ॥

---

अयं वेन इति । भार्गवस्य वेनस्यार्षम् । शुक्रोऽनया गृह्यते ( मैत्रा० सं० १ । ३ । १० ) । अन्तर्भावितप्रज्ञानस्तस्मिन्ननासे प्रत्यक्षीभूतमभिनयेन दर्शयन्निव कस्मैचिद्ब्रवीति अयं वेन इति ।

वेनः — किं करोति । चोदयति पृश्निगर्भाः । पृश्निरादित्यः प्राष्टवर्णः । प्रकृष्टो ह्यनेन वर्णः संसृष्टः आप्तः । यास्तस्य गर्भत्वमुपागता रश्म्यन्तर्गताः परिपक्वा आपो मासाष्टकेन संभृतास्ता वेनश्चोदयति प्रावृषि वर्षभावेन प्रेरयति । किंलक्षणः । ज्योतिर्जरायुः । ज्योतिरस्य विद्युदाख्यं कर्मात्मलक्षणं जरायुस्थानीयं प्रज्ञानतस्तदधिष्ठातुर्मध्यमस्य गर्भस्येव परिवेष्टनं भवति । क्वावस्थितश्चोदयति । रजसो विमाने । रज उदकं तद्यत्र

---

१ क. ख. १ ( ३८ ), ट. °वति । इनि निरुक्तभाष्ये उत्तरषट्के चतुर्थाध्याये ३८ खण्डः, ड. °वति । इति निरुक्तभाष्ये ३८ खण्डः; ग. च. वर्गमितरेष्वङ्को नास्ति. २ त. थ. ध. °रायुःस्था°. ३ ङ थ. द. °रायुजर° ४ छ. त. द. रिहन्ति रिहन्ति ठि°. ५ क. ख. ञ. त. द. गर्भ इ-यसु°. ६ घ. ङ. २ ( २९ ); त. द. २. ७ क. ख. घ. झ. ट. ठ. ढ. आप्त; ड. प्राप्त.° आ. ८ क. ख. घ. झ. ट. ठ. ढ. °मुपा°. ९ च. °रायुः स्था°.

निर्मीयते[1] तत्रावस्थितः । अन्तरिक्षलोक इत्यर्थः । योऽयमेवमादिगुणयुक्तो वेनस्तमिमं वेनम् अपां च संगमे सूर्यस्य च सगमे समागमनस्थाने यत्र सूर्यस्य रश्मिभिरापः संगच्छन्ते तत्र वर्तमानं मध्यस्थाने[2] विप्रा मेधाविनः स्तोतारो मतिभिः स्तुतिभिः मज्ञापूर्विकाभिः शिशुमिव रिहन्ति । यथा[3] शिशुर्नित्यं स्तूयत एवं स्तूयते । यदेतत् ' रिहन्ति '[4] इति एतत् ' लिहन्ति ' लिहेर्धातोः । वर्धयन्ति पूजयन्ति वेन्यर्थवचनम् ।

**जरायुः कस्मात्**

' जरायुः ' कस्मात् । तद्धि ' जरया गर्भस्य ' भवति । यथा यथा गर्भो भवति तथा तथा तदुत्पद्यते । ' जरया यूयत इति वा ' । यच्चैतज्जरेति प्रसिद्धं प्रसूताया गोः स्त्रिया वा पश्चात्पतति सा जरेत्युच्यते तया यद्युतं मिश्रयते तज्जरायुरित्युच्यते ।

**शिशुः कस्मात्**

' शिशुः ' कस्मात् । स हि ' शंसनीयो भवति ' । प्रयोजने वाप्रयोजने वोचन्ति यत्किंचनप्रलापेषु । ' शिशीतेर्वा स्यात् ' धातोर्दानार्थस्य । दीयते हि स पुरुषेण स्त्रियै धारणाय । भवति च वादः स्त्रीणामभिनवगृहीतगर्भाणाम् ' अचिरलब्धो[6] मे गर्भः ' इति ।

**असुनीतिः कस्मात्**

'असुनीतिः' (२७) इत्येतद्देवतापदम् । स पुनरयमिन्द्रो मध्यमः प्राणः । स पुनर्यदेतस्माच्छरीरादुत्क्रामन्येतरान्प्राणान् ' असून् ' अन्यत्र ' नयति ' । विज्ञायते हि ' प्रणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति ' ( बृहदा० उप० ४ । ४ । २ ) इति । ' तस्यैषा भवति '[8] ॥ ३९ ॥

---

' असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः । रारन्धि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व ( ऋ० सं० १० । ५९ । ५ )॥ असुनीते मनोऽस्मासु धारय चिरं जीवनाय प्रवर्धय च न आयू रन्धय च नः सूर्यस्य संदर्शनाय रश्मितिर्वशग-

---

१ क. ख. ग. ज. निर्मीय°, ठ. ड. °तयन्तर्निधीय°. २ ठ. ड. मध्यमस्थाने. ३ क. ख. घ. झ. ट. ठ. ड. यथा हि शि°. ४ क. ख. घ. झ. ट. ठ. ड. °त्यर्थः । ज°. ५ ग. घ. ज. ' वा ' नास्ति. ६ क. ख. घ. झ. ट. ठ. ड. °चिरालब्धो. ७ क. ८ क. ख. नेनेनाम्मच्छरीर एव धारय मा त्वमुत्क्रमीः । त्वदन्यत्र मयानि°. ८ क. ख. २ ( ३१ ); ठ. ड. °वति । इति निरुक्तभाष्ये. १० ख. ११ ग. घ. ' पुनरिन्द्रो ' नास्ति. ९ ठ. त. द. मनो अस्मा°.

मनेऽपि दृश्यते। मा रधाम द्विषते सोम राजन्नित्यपि निगमो भवति । घृतेन त्वमात्मानं तन्वं वर्धयस्वर्तो व्याख्यातस्तस्यैषा भवति ॥ ४० ॥

---

असुनीतिः

असुनीते मनो अस्मासु धारयेति । श्रुतबन्धोरार्षम् । हे असुनीते प्राण मनः अस्मासु धारय । मनःप्रभृतीनेतान् प्राणाद्यानवस्थानेनास्मच्छरीरेषु धारय । मा स्मुत्क्रमीरन्नुक्रमेणावस्थास्यन्त इति । जीवातवे चिरम् अस्माकं जीवनाय मनो धारय । सु प्रतिरा न आयुः । अमुना प्रकारेण सुष्ठु प्रतिर प्रकर्षेण वर्धयास्माकमायुः । किंच । रारन्धि नः सूर्यस्य । अस्माकं तथानुगृहाण यथा सूर्यस्य संदृशि संदर्शनायालं स्याम । दिव्यं नः चक्षुरुत्पादय येन सम्यक्सूर्यं पश्येम । सर्वं चैतद्धनप्राचुर्ये सति भवति । अतो ब्रूमः । घृतेन त्वं तन्वं वर्धयस्व । घृतेन उदकेन त्वमात्मानं यथाकालं वर्धयस्व । स ह्युदकं ददाति सर्वमिदं भवति । गृहनिर्माणत्वादसुनीतेर्घृतमित्युदकनामेत्यत्रोपपद्यते ।

स्वपतिर्वेशस्य मनेऽप्यामृचि

'स्वपतिर्वेशस्यमनेऽपि दृश्यते' । तद्यथा 'मा रधाम द्विषते' इत्यत्र । 'देवीः षळुर्वीरुरु नः कृणोत विश्वे देवास इह वीरयध्वम् । मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन्' ( ऋ० सं० १० । १२८ । ५ ) इति ॥ वैश्वदेवी । विहव्यस्यार्षम् । वैहवं सूक्तम् । तत्रैषा दर्शपूर्णमासयोः हविषामभिमर्शने विनियुज्यते । देवीः षट् द्यौश्च पृथिवी च अहश्च रात्रिश्च आपश्चौषधयश्चेति । ता उच्यध्वे । हे देव्यः उर्व्यः षट् सर्वमिदम् ऊर्णुवत्यो यूयं भवथ । उरु बहु यदस्माकं युष्माभिर्बहु क्रियमाणमिष्टमस्ति तत् उरु बहु कुरुध्वं । हे विश्वे देवा यूयमपि इह एतस्मिन् कर्मण्यस्माकमङ्गभावमुपगताः सन्तो वीरयध्वं वीरान् पुत्रान्

---

१ क. ख ३ ( ४० ); स. ह ३. २ ह ह. °मते इति. २ ग. °येति । श्रु°. ४ ग. घ. ज. सुत्क्रमी°. ५ ग घ. ज. °स्य दृशि. ६ ग. घ. ज. ठ. क. षळुर्वी°. ७ ज. °ोति ते । देव्य°; च. ज. प. स ट. °योर्वीति° । देव्य°. ८ ग. घ. ज. बहु बहु.

इच्छत दातुम् । अपि च । जातपुत्राः सन्तः मा हास्महि प्रजया । मास्मान् प्रजा कदाचिदपि हासीत् । कष्टं हि पुत्रमरणम् । मा तनूभिर्न्नैवं स्वाभिर्हास्महि । मास्माकमायुषश्छेदो भूद्युष्मदनुध्यानात् । अपि च । मा रधाम द्विषते सोम राजन् । हे भगवन् सोम राजन् विशेषतः त्वमुच्यसे । सर्वस्या अस्या आशिषस्त्वदनुध्यानान्मा रधाम । मा वशं गच्छेम द्विषते । द्विषन्त एवास्माकमर्थसंप्रदानादिना वश्यतामुपयान्तु यतोऽनिष्टं हि द्विषतो विधेयत्वमिति । सामर्थ्यादिह ' रध्यतिर्वशगमने ' ।

' ऋतः ' (१६) इत्येतत्पदम् । तदेतत् ' व्याख्यातं ' निर्वचनतः ऋतमित्युदकनाम प्रत्यृतं भवति ' ( नि० २ । २५ ) इति । इह मिधेयो मध्यमः । ' तस्यैषा भवति ' ॥ ४० ॥

---

ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति । ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ( ऋ० सं० ४ । २३ । ८ ) ॥ ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य प्रज्ञा वर्जनीयानि हन्ति ऋतस्य श्लोको बधिरस्यापि कर्णावातृणत्ति बधिरो बद्धश्रोत्रः कर्णौ बोधयन्दीप्यमानश्चायोरयनस्य मनुष्यस्य ज्योतिषो वोदकस्य वेन्दुरित्येतत्तरां तस्यैषा भवति ॥ ४१ ॥

---

ऋतस्य हि शुरुध इति । वामदेवस्यार्षम् । संपारसूक्ते निर्ध्येयस्यैद्रपाभिष्टवे : शस्यते ( अश्व० श्रौ. ९ । ७ ) । ऋतस्य मध्यमस्य । किमिति । शुरुधः आपः सन्ति विद्यन्ते । किंलक्षणाः । पूर्वीः अनेककालसंभृताः । यतश्चासौ इन्द्रोऽद्रिरतस्तस्य ऋतस्य उदकप्रदानद्वारेण नाकाले नाशयन्ती धीतिः

ऋतः

१ ग. घ. ज. ठ ड. प्रत्यृतं २ क. ख. ३ (४०) ; ठ. ड °वति । इति निरुक्तभाष्ये ४८ १५६ ; ग ऋतमर्जितोदकं नास्ति. ३ त. 'प्रज्ञा वर्ध (र्ज) नी'; द. 'प्रज्ञावर्जनी°. ४ क. ख छ. त. द. इत्यृत°. ५ छ. त द. 'आपनस्य. ६ क. ख. ४ ( ४१ ), न त्. ४. ७ ग. इति । दा°.

प्रज्ञा सर्वलोकस्य वृजिनानि वर्जनीयानि अयशांसि हन्ति नाशयति । अनाकाले हि क्षुत्परिगृहीतानामयशस्करेषु जिह्मादिषु प्रवृत्तिर्भवति । ददतश्चोदकं सर्वलोकवृजिनापवर्ताय तस्य जनस्य एवमतिमहान् श्लोकः कीर्तिः[1] स्तनयित्नुलक्षणो भवति यो बधिरस्यापि बधिरस्य विधोन्त्रापि निसर्गतोऽपिहितश्रोत्रस्य आयोः अयनस्य मनुष्यस्य बोधयत्यमृत इति । कर्णौ अतिदुर्भेदौ आतृणत्ति आभिनत्ति[2] शुचमानो दीप्यमानो ज्योतिषश्चोदनस्य च श्लोकः । एवं सततो व्याहृत इति ।

'इन्दुः' (२७) इत्येतत्पदम् । स कस्मात् । 'इ धेः' दीप्त्यर्थस्य । 'उनत्तेर्वा' क्लेदनार्थस्य । उभयमपीन्दावुपपद्यते चन्द्रमसि । 'वर्धते भवति' ॥ ४१ ॥

इन्दुः कस्मात्

---

प्र तद्वोचेयं भव्यायेन्दवे हव्यो न य इषवान्मन्म रेजति रक्षोहा मन्म रेजति । स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिम् । अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत् ( ऋ० सं० १ । १२९ । ६ ) ॥ प्रब्रवीमि तद्भव्यायेन्दवे हवनार्ह इव य इषवानन्नवान्कामवान्वा मननानि च नो रेजयति रक्षोहा च बलेन रेजयति स्वयं सोऽस्मदभिनिन्दितारम् । वधैरजेत दुर्मतिम् । अवस्रवेदघशंसस्ततश्चावतरं क्षुद्रमिवावस्रवेदभ्यासे भूयांसमर्थं मन्यन्ते यथाहो दर्शनीयाहो दर्शनीयेति तत्परुच्छेपस्य शीलं परुच्छेप ऋषिः पर्ववच्छेपः परुषि परुषि शेपोऽस्येति वेतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि सूक्तभाञ्जि हविर्भाञ्जि तेषामेतान्यर्धविर्भाञ्जि वेनोऽसुनीतिर्ऋत इन्दुः प्रजापतिः प्रजानां पाता वा पालयिता वा वर्षपा भवति ॥ ४२ ॥

---

१ क. ग. घ. °पवाता°. २ क. ख. ४ (४१); ड. °वति । इति नैरुक्तभाष्ये ४१ खण्डः; ङ. °वति । इति निरुक्तभाष्ये ४ । खण्डः. ग. घ. वर्धयितेत्यधो नास्ति. ३ क. ख. छ. त द से असं. ४ ज. त. द. 'वर्षापोपेरः' नास्ति. ५ क. ग.-५ (४२); त. द. ५.

**इन्दुः**

प्र तद्वोचेयमिति । अतिच्छन्दाः । पारुच्छेपी । पष्ठेऽहनि मरुत्वतीये शस्यते ( आश्व० श्रौ० ८ । १ ) । यद्दिष्टं तस्येन्दोस्तत्तदहं प्रब्रवीमि अस्मै इन्द्राय प्रीत्यर्थम् । किंलक्षणः यः इन्दुः । भव्यो भवनार्ह आत्मवान् । अभिप्रेतानां पात्रभूत इत्यर्थः । भव्यो भावनार्ह इव । यो हविषा भावनमर्हति न च भाव्यतेऽहविर्भावत्वात् । हव्यो न हवनार्ह इव यो यज्ञेन च पुनराहूयतेऽहविर्भाक्त्वादेव । इष्वान् नित्यम् अन्नवान् । कामवान् वा । कामिना स्तोतॄणा नित्यमभिमतफलसंप्रदानोन्मुखः । तत्संप्रदानोन्मुखतया च नित्यमस्माकं मन्म रेजति मननानि प्रज्ञानानि रेजयति आकम्पयति । अकम्पितहृदयान् उपकारितया नित्यमस्मान् करोति कथं नाभैनं नित्यं स्तुयामेति । अपि च । रक्षोहा रक्षांसि बलेन घ्नन् सुतरामस्माकं मन्म रेजति । किंच । स्वयं सो अस्मदानिदः । स्वयमादस्थान् भूत्वा स इन्दुः अस्मदानिदः अस्मदभिनिन्दितान् वज्रप्रहारैरतिदुःसहैः अर्जेत जयेत् क्षिपेद्वा दुर्मतिं पापमतिं योऽस्मान् प्रति । तेन वातिबलवतेन्दुना हन्यमानोऽस्मद् अवशंसः अस्माकं यः पापानां शंसिता कथयिता स्वल्पानामपि स्फीतिकर्ता जनपदे अमो अवस्रवेत् । अधोगतिः स्यात् । अवतरमश्च क्षुद्रमिव स्रवेत् । यावच्च परमं स्रुत । अधोगतस्ततोऽवतरं ततोऽप्यवस्तरमिति तावत्स्रवेत्क्षुद्रमिव द्रव्यं किंचिद्यावदामूलतो नश्येदेतदाशास्महे । अवक्षतेर्मध्यम इति ।

**अभ्यासे भूयानर्थः**

इत्यभ्यासन्न दृश्यं दृष्ट्वा 'रेजति रेजति स्रवेत् स्रवेत्' इति प्रतिसमाधत्ते 'अभ्यासे भूयांसमर्थं मन्यन्ते' इति । शब्दाभ्यासे यत्रान्योऽविशेषो नास्ति तत्रैवं विशेषमाचार्या मन्त्रार्थसतत्त्वविदो मन्यन्ते 'यदुतार्थभूयस्त्वम्' इति । यं यथास्माम एव शब्दः पुनरभ्यस्यते । यथैकोऽपि चेतद् दृष्टं शब्दाभ्यासेऽ-

---

१ ग. °मिति°। अ°. २ ग. °क्षणाय इदु°. ३ ग. घ. ज. भव्याय भवनार्ह°. ४ क. ख. घ. झ. ट. °शब्द°. ५ ग. च. ज. स्तोतीणां. ६ ग. घ. ज. °फलकामस्य°, ट. °फले° वाम. ७ ग. घ. ज. ठ. ढ. मुनः. ८ क. ग. घ. झ. ट. ठ. ढ. °व्यवता°. ९ क. ख. घ. झ. ट. ठ. ढ. तत्रैवं. १० ग. घ. ज. इति । सर्व ( ग. ज. सर्व, घ. वै ) दिनि प्रथमं स्रुतातरोऽवरं ( घ. °वस्तरं ) ततोऽप्यवस्तरमिति तावत्स्रवेत्क्षुद्रमिव द्रव्यं किंचिद्यावदामूलतो नश्ये-त्येवम् ( ग. ज. °मिति च ) । अ°.

धंभूयस्त्वमिति ' यथाहो दर्शनीयाहो दर्शनीयेति ' । गुणातिशये हि त्रियाः शब्दाभ्यासः । तस्मान्मन्त्रेऽपि तद्वदेवेति न्याय्यम् । ' तत् ' च पुनरेतत् ' परुच्छेपस्य ' मन्त्रदृशः ' शीलम् ' । स हि नित्यमभ्यस्तैः शब्दैः स्तौति । स ऋदृशोऽपि स्वभाव उपेक्ष्य इत्युपप्रदर्शनायेदमुक्तम् । अथ पुनः ' परुच्छेपः ' कस्मात् । ' परुच्छेप ऋषिः ' । तस्य हि ' पर्ववत् ' महान् ' शेपः ' प्रजननम् । ' परुषि परुषि शेपोऽस्येति वा ' । सर्वाङ्गसन्धिषु शेफः कृतो योगमुखात्किल । तस्य शेपोऽस्तीति वा ।

अभ्यासः परुच्छेपस्य शीलम्

परुच्छेपः कस्मात्

' इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि ' । इतिकरणः प्रकारवचनः । एवमेतानि यथासमाम्नातानि सप्तविंशतिः सप्ताधिका विंशतिः । देवतानामधेयानि ' वायुः ' इत्यत आरभ्य यावत् ' इन्दुः ' इति । तेषां पुनः किमर्थमनुकीर्तनम् । विशेषविवक्षया । कः पुनरसाविति । तेषां कानिचित् ' सूक्तभाञ्जि हविर्भाञ्जि ' च । सूक्तं च हविश्चोभयं भजन्ते । कानिचित्सूक्तमेव न हविः । ' तेषामेतान्यहविर्भाञ्जि ' । तद्यथा । ' वेनोऽसुनीतिर्ऋत इन्दुः ' इति । एभ्यो यान्यन्यानि त्रयोविंशतिस्तान्युभयं भजन्ते सूक्तं हविश्च । देवतास्वभावोपप्रदर्शनार्थमिदमुक्तम् । घृतेन उदकेन स्तम्भमानं वर्धयस्वेत्येवमाद्यभिधानार्थं विशेषविभागप्रदर्शनायेऽहविर्भाक्त्वादुदकमत्र घृतमित्युक्तमादि तद्वतेषु मन्त्रेषु विशेष उपदेश इति । ' प्रजापतिः ' ( २८ ) प्रजानां पाता वा पालयिता वा । ' तस्यैषा भवति ' ॥ ४२ ॥

एषु सप्तविंशतिदेवतानामधेयेषु कानिचित्सूक्तभाञ्जि हविर्भाञ्जि च

कानिचित्सूक्तभाञ्जि एव

प्रजापतिः कस्मात्

---

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्

---

१ ग. च. ज. ' अहो ' नास्ति. २ ग. च. ज. ' हि ' नास्ति. ३ च. दत्. ४ क. स. घ ङ. ट. शेफकृतो योगः सु°; च. °सन्धिशेषः कृतो योगमुखा°. ५ ग. ज. °स्तम्भाय हवि°; घ. °प्रज्ञापयहवि°. ६ ग. च. ज. देवत इ°. ७ क. ङ. ५ ( ४२ ); ट. ढ. °पाति । इति निरुक्तभाष्ये ४२ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति.

**( ऋ० सं० १०। १२१। १० ) ॥ प्रजापते न हि त्वदेतान्यन्यः सर्वाणि जातानि तानि परिबभूव यत्कामास्ते जुहमस्तन्नो अस्तु वयं स्याम पतयो रयीणामित्याशीराद्याख्यातस्तस्यैषा भवति ॥ ४३ ॥**

---

प्रजापते न त्वदेतानीति[3] । प्राजापत्यस्य हिरण्यगर्भस्यार्षम् । पितृयज्ञ उपस्थाने विनियुक्ता ( मैत्रा० सं० १ । १० । १९ ) । राजसूये च विनियोगो होमे ( मैत्रा० सं० २ । ६ । १२ ) । हे प्रजापते न त्वदन्यो न कश्चिदपि एतानि सर्वदेवतारूपाणि परिबभूव परिगृह्य भवति । त्वमेवैतानि सर्वाणि सर्वतः परिगृह्य सर्वतो भवसि[4] । यत एव त्वं अयं सर्वतो विभूतं [5]स्याम: सर्वस्येशानमतो ब्रूमः । यत्कामास्ते येन येन युक्ताः सन्तो वयं तुभ्यं जुहुमस्तन्नो अस्तु । स कामोऽस्माकं त्वदनुध्यानात्समृध्यताम् । नित्यमेव च वयं स्याम पतयो रयीणाम् । रयीणां धनानां पतयः । ' इति ' इयमपरा ' आशीः ' द्वितीया । यत्कामा इति प्रथमा । अथवा । ' आशीः ' इत्याचार्यो दर्शयति । इयं मन्त्रगतैव यत्रापि न स्यात्तत्राप्यध्याहार्येति स्तुत्याशिषोर्नित्यसंबन्धादिति ।

प्रजापतिः

' अहिः ( २९ ) व्याख्यातो ' निर्वचनतः ' अहिरयनात् ' ( निरु० २ । १७ ) इति । इह त्वभिधेयो मध्यमः । ' तस्यैषा भवति ' ॥ ४३ ॥

---

**अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु षीदन् ( ऋ० सं० ७ । ३४ । १६ ) ॥ अप्सुजेमुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसूदकेषु सीदन्बुध्नमन्तरिक्षं बोधा अस्मिन्धृता आप**

---

१ छ. त. द. जातानि परि तानि बभूव. २ क. ख. ६ ( ४२ ); त. द. ६. ३ ग. °नीति । प्रजा°; घ. ज. °नीति । प्रजा°; ठ. ड. °तान्यन्य इति. ४ ग. घ. ज. भवति. ५ ग. घ. ज. त्वा. ६ ग. घ. ज. 'भूतं वयं प°. ७ ग. घ. ज. °त्समृध्यतां. ८ क. ख. ६ ( ४३ ), ठ. ड. °वति । इति निरुक्तभाष्ये दशमाध्याये ४३ खण्डः; ग. घ. ज. मितोऽग्रे नास्ति. ९ छ. त. द. अप्सुजाम°. १० छ. त. द. °जः सु षीद°. ११ छ. त. द. बुद्धा. १२ छ. त. द. आप इद°.

इति वेदमपीतरद्बुध्नमेतस्मादेव बद्धा अस्मिन्धृताः प्राणा इति योऽहिः स बुध्न्यो बुध्नमन्तरिक्षं तन्निवासात्तस्यैषा भवति ॥४४॥

---

**अहिः**

अब्जामुक्थैरिति । वासिष्ठस्यार्षम् । दशरात्रस्य चतुर्थेऽहनि वैश्वदेवे विनियोगः ( आश्व० श्रौ० ८ । ८ )। हे स्तोतस्त्वमेनम् अहिम् अप्सुजम् उदकजन्मानम् उक्थैर्गृणीषे स्तौषि बुध्ने नदीनां नद्नानाम् अपां बन्धने एतस्मिन्नन्तरिक्षे वर्तमानं रजःसु सीदन् उदकेषु लब्धप्रेषु निमित्तभूतेषु एतस्मिन्कर्मण्यनुभावमुपगच्छन् ।

**बुध्नं कस्मात्**

**अहिर्बुध्न्यः कस्मात्**

'बुध्नमन्तरिक्षं बद्धा अस्मिन् धृता आपः इति । इदमपीतरत्' शरीरं बुध्नमित्युच्यते । 'बद्धा अस्मिन् धृताः प्राणाः इति । योऽहिः स बुध्न्यः' । एतावांस्तु विशेषः । 'बुध्नमन्तरिक्षं तन्निवासात्' अहिर्बुध्न्यः ( ३० )। 'तस्यैषा भवति ॥ ४४ ॥

---

मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्रिधदृतायोः ( ऋ० सं० ७ । ३४ । १७ ) ॥ मा च नोऽहिर्बुध्न्यो रेषणाय धान्मास्य यज्ञोस्या च स्रिधद्यज्ञकामस्य सुपर्णो व्याख्यातस्तस्यैषा भवति ॥ ४५ ॥

---

**अहिर्बुध्न्यः**

मा नोऽहिर्बुध्न्य इति । पूर्वया समानं सर्वमिति । मा अस्मान् अहिर्बुध्न्यो रिषे धात् रेषणाय हिंसनाय कस्मैचित् । किंच । मा यज्ञो अस्य स्रिधदृतायोः । मा यज्ञोऽस्य ऋतायोः अस्य यजमानस्य यज्ञकामस्य मा स्रिधत् मा मुसलवत् । नित्यमविनाशेन वर्ततामिति ।

---

१ छ. त. द. बुद्धा. २ क. ख. ७ (४४) त. द. ७. ३ ग. 'रिति । वास'. ४ ग. च. ज. वासिष्ठस्य पराशरस्यार्षं. ५ ग. ज. °तरद्बुध्नमपी°. ६ क. ख. ७ ( ४४ ), ठ. द. °वति । इति निरुक्तभाष्ये ४४ खण्डः; ग. च. वर्जमिन्द्रेवव्हो नास्ति. ७ क. ख ८ ( ४५ ), त. द. ८. ८ ग इन्ते । पू°. ९ ग. ख. घ. झ. ट ठ. धात् मारे°. १० क. ख. घ झ ट 'चित् धात् । किं'. ११ क. ख. ग. घ. ज. स्रध°. १२ ग. घ. ज. मुस°. १३ ग. घ. ज. मा स्रिस्त (स!) वत्.

' सुपर्णो (३१) व्याख्यातः ' ' सुपतनः ' ( निरु० ३ । १२ ॥ ४ । ३ ) इति । इह त्वभिधेयो मध्यमः । ' तस्यैषा भवति ' ॥ ४५ ॥

---

एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे। तं पाकेन मनसापश्यमन्तितस्तं माता रेह्ळि स उ रेह्ळि मातरम् (ऋ० सं० १०।११४।४) ॥ एकः सुपर्णः स समुद्रमाविशति स इमानि सर्वाणि भूतान्यभिविपश्यति तं पाकेन मनसापश्यमन्तित इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता तं माता रेह्ळि वागेषा माध्यमिका स उ मातरं रेह्ळि पुरूरवा बहुधा रोरूयते तस्यैषा भवति ॥ ४६ ॥

---

एकः सुपर्ण इति । सर्वार्थस्य वेयमार्थम् । एक एवाद्वितीयः । यस्य पतने गमने प्रतिमानन्यद्वितीयं नास्ति । स

सुपर्णः

सुपर्णः सुपतनो वायुः समुद्रम् अन्तरिक्षनिलम् आविशति । न कदाचिदप्यनाविष्टस्तत्र । स च पुनः सर्वभूतानुप्रवेशी तदाविश्य विश्वं भुवनं सर्वाणि इमानि भूतानि अभिविपश्यति यथा द्रष्टव्यानि । तमेव वर्तमानमहं पाकेन मनसा विपक्वप्रज्ञानेन सर्वगतमपि सन्तम् अन्तिकम् इव अपश्यम् । ऋषिर्दृष्टदेवतासतत्त्वः कस्मैचिदाचक्षाणो ब्रवीति । तं माता रेह्ळि स उ रेह्ळि मातरम् । माता माध्यमिका वाक् तम् उपजीवति परस्परं श्रय वात्तयोर्वृत्तेरध्यात्मवदिति ।

' पुरूरवाः ' (३२) मध्यमः । विज्ञायते हि ' प्राण एव हि पुरूरवाः ' इति । स ' बहुधा रोरूयते ' स्तनयति । तेन पुरूरवाः । ' तस्यैषा भवति ' ॥ ४६ ॥

पुरूरवाः कस्मात्

---

१ क ख. ८ ( ४५ ), ठ. ढ °वति । इति निरुक्तभाष्ये चतुर्थाध्याये ४५ खण्डः; ग. घ. वर्गमितरेखाङ्को नास्ति. २ क ख. ठ ढ रेढि, छ. त. द रेळि. ३ क. ख. ९ (४६), त. द ९ ४ ग. इति । स°. ५ ग. च. ज. °र्थमभिनिर्दिष्टस्य वे°. ६ क ख. घ. झ ट. प्रतिमायाम°. ७ ग. च. ज. °चक्षाणो. ८ ग. च. ज. च झ रेळि. ९ ग घ ज. ' एव ' नास्ति. १० क. ख. ९ (४६); ठ. ढ. °वति । इति निरुक्तभाष्ये चतुर्थे ४६ खण्डः; ग. च. वर्गमितरेखाङ्को नास्ति.

समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्यः १ स्वगूर्ताः । महे यत्त्वा पुरूरवो रणायावर्धयन्दस्युहत्याय देवाः ( ऋ० सं० १० । ९५ । । ७ ) ॥ समासतास्मिञ्जायमाने ग्ना गमना दापो देवपत्न्यो चापि चैनमवर्धयन्नद्यः स्वगूर्ताः स्वयंगामिन्यो महते च यत्त्वा पुरूरवो रणाय रमणीयाय संग्रामायावर्धयन्दस्युहत्याय च देवा देवाः ॥ ४७ ॥

---

**पुरूरवाः**

समस्मिञ्जायमान इति । उर्वश्या आर्षम् । एतस्मिन् पुरूरवसि जायमाने वर्षकर्मण्यात्मानं प्रतिलभमाने प्रावृट्काले । ‘ कर्मजन्मानः ’ ( निरु० ५ । ५ ) इति ह्युक्तम् । समासत ग्नाः । आपः समागम्य तं परिवार्य तद्विधेयतामुपगम्य आसते तिष्ठन्ति । उत अपि च यथार्यैवर्तुवशाद्वर्षासु नदः आरोहति तथा तथैनं ता नद्यः नद्यो आपः स्वगूर्ताः स्वयंगामिन्यो भूत्वा सुतरां तद्विधेयतामुपगच्छन्त्यस्तदधिकारोद्भवेन इमम् एनम् वर्धयन्ति । अतः परं स्तूयमानः प्रत्यक्षीभूत । प्रत्यक्षकृत उत्तरोऽर्धर्चः । हे पुरूरवः यत्त्वा महे रणाय यस्मात्त्वा महते रणाय येन सह रमणीयाय संग्रामाय अवर्धयन् वर्धयन्ति माध्यमिका देवाः दस्युहत्याय च मेवच गय चेति तस्मात्त्वामहं ग्नाः समागम्यानते वर्धयन्ति च नद्यः । सर्वथापि महानुभावस्य सर्वमेव त्वय्युपपद्यत इति ।

‘ देवपत्न्यो वा ’ इति पृथक्त्वेन दर्शयति । तथापि योज्यते । समागम्यैतस्मिन्नेडे पुरूरवसि आसत ग्नाः सर्वा देवपत्न्यः । स हि स्त्रीणां स्वभावो यत्प्रनायमर्मिना स्त्रिय परिवार्यासते । उतेमवर्धन् । अपि चैनमवर्धयन् । नद्यस्ताः स्तुतिपरास्तस्य । स्वगूर्ताः स्वयंगामिन्यः अपरेरप्रणेया ईश्वराः । अपि च । सर्वमेतदुपपद्यते पुरूरवस्त्वयि यस्मात्त्वा महते रणाय

---

१ छ त. द ‘स्वगूर्ताः’ नास्ति. २ क ख. १० (४७), ग द १ . ३ ठ. ड. °स्मिञ्जाने. ४ ग. इति । उ°. ५ ग. ज. °म. समासतास्मिन् पुरूरवसि आप°. ६ ग च ज. °यथैतम्°. ७ क. ख. घ ङ ट. ८. ड ‘च’ नास्ति. ८ ट. °मानो स्त्रि° न वि. ९ क ख. घ ङ. ट ना ग्नाः स्तु° , १० घ. ज. °रणाय., च. ° महेरणा°, ट. °रमणाय° हे.

रमणीयाय संग्रामाय असुरैः सह दस्युहत्याय शत्रुवधाय अवर्धयन् । त्वैर्मैहिमभिस्त्वं नोऽसुरान् जेष्यसीति पुरश्चक्रुर्देवा इति । द्विरभ्यासोऽध्यायपरिसमाप्तौ यस्मात्तल्लक्ष्यते[3] समाप्तम्[1] ॥ ४७ ॥

---

ऋग्वर्थायां निरुक्तपद्धतौ पञ्चदशोऽध्यायः समाप्तः[2] ।

---

* अथातोमध्यस्थानाश्वाथैवायाह्यासस्तॄणासोनीचीनवारंतमूष्विमाऐन्द्रायया तेदिद्युज्जर्राबोधाददर्यांआतोविद्विक्षानश्चिपिनद्धमस्मास्यैमयतंक्षेत्रस्यपतिःक्षेत्रस्यपतिनाक्षेत्रस्यपतेऽभीवहापुनरोहियोअनि+ध्मपरोऽवासंसेनवसृष्टामित्रोजनान्हिरण्यगर्भोयेतेसरस्वोविश्वकर्मासर्व×स्यविश्वकर्माविमनाविश्वकर्मन्हाविषात्यर्मूपुसदोश्वित्त्वयामन्योआदधिक्रावासवितादिरण्यस्तूपोदेवस्त्वष्टावातआवातुप्रतित्यमभित्वावेनोवेनतेरयंवेनोऽसुनीतकालस्यहिमतद्धोचेयंप्रजापतेऽजाप्तुंयथैमोनोहिरेकःसुपर्णःसंसमिसमिन्त्सप्तचत्वारिंशत् = ॥

इति निरुक्त उत्तरषट्के चतुर्थोऽध्यायः[4] ॥

---

१ क. ख. घ. झ. ट. °स्माल्लक्ष्य°, ठ. ढ. °माप्तौ । अस्माल्लक्ष्य°. २ ठ. ढ. 'समाप्त' नास्ति. ३ क. ख. १० (४७), ठ. ढ. °लक्ष्यते । इति निरुक्तटीकायामुत्तरषट्के चतुर्थाध्याये ४७ खण्डः । समाप्तश्चतुर्थोऽध्यायः. ४ क. ख. घ. झ. ट. ठ. ढ. इति श्री (ठ. ढ. 'श्री' नास्ति) जम्बूमार्गाश्रमवा (ठ. ढ. निवा) सिन आचार्यभगवद्दुर्गकृतावृजर्थायां निरुक्तवृत्तौ (ठ. ढ. निरुक्तटीकायां निघण्ट्वध्यायपञ्चकेन सह नैरुक्त) पञ्च°. * छ. त द. अथातो इत्यादिका खण्डसूची नास्ति. + क. ख. घ. °निध्म.प°. × ट. ड. सर्वस्य कर्ता विश्व°. = ठ. ढ. °शत् । इति बालबोधार्थवैदिकैः (ड. का) प्रदायानुसारी खण्डानुक्रमणी समाप्ता. 'इति० ध्यायः' नास्ति ५ छ. इति निरुक्ते दशमोऽध्याय, त. दशमोऽध्यायः समाप्तः; द. इति दशमोऽध्यायः, प. इति निरुक्ते द्वि°. ठ. ड. ट. ढ. °ध्यायः समाप्तः.

## प्रथमः पादः ।

ॐ । श्येनो व्याख्यातस्तस्यैषा भवति ॥ १ ॥

श्येनो ( निघ० ५।५।१ ) व्याख्यातः 'श्येनः शंसनीयं गच्छति' ( निरु० ४।२४ ) इति । इह त्वमित्रेयो मध्यमः । तस्यैषा[3] भवति ॥ १ ॥

आदायं श्येनो अंभरत्सोमं सहस्रं सवाँ अयुतं च साकम् । अत्रा पुरंन्धिरजहादरांतीर्मदे सोमंस्य मूरा अमूरः ( ऋ० सं० ४।२६।७ )॥ आदाय श्येनोऽहरत्सोमं सहस्रं सवानयुतं च सह सहस्रं सह-स्रसाव्यमभिप्रेत्य तत्रायुतं सोमभक्षास्तत्संबन्धेनायुतं दक्षिणा इति वा तत्र पुरन्धिरजहादमित्रानदानानि[4]ति वा । मदे सोमस्य मूरा अमूर इत्यै[5]न्द्रे च सूक्ते सोमपानेन च स्तुतस्तस्मादिन्द्रं मन्यन्त ओषधिः सोमः सुनोतेर्यदेनमभिषुण्वन्ति बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन तस्य पावमानीषु निदर्शनायोदाहरि-ष्यामः ॥ २ ॥

आदाय श्येन इति[6] । वामदेवस्यार्षम् । श्येनाजिरादिषु मरुत्वतीये शस्यते ( आश्व० श्रौ० ९।७ ) । ऋत्विग्भिर्विधानतः प्रत्तं श्येनः इन्द्रः सोमम्

श्येनः — आदाय अभरत् अपिबत् । क । सहस्रं सवान् सहस्रं सुत्याना यत्र कुर्वन्ति अयुतं च दक्षिणाः

प्राप्नुवन्ति न तु दीयन्ते सत्रत्वात् । पृष्ठ्यशमनाभिप्रायं वा दक्षिणादानं

१ ङ. ड. हरि. ओम् । श्ये°; थ. °ओं २ म् । श्ये°; छ. तुं । श्ये°; ध. हरिः॥ ॐम् ॥ श्ये°; त. द. 'ॐ' नास्ति. २ ग. ज. तुं । श्ये°; च. पुस्तके श्येन इत्यादि सोमस्य तृप्तावित्यन्तं नास्ति. ३ ढ. ड. इति निरुक्तोत्तरषट्कभाष्ये पञ्च-माध्याये प्रथमः खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. ४ छ. त. द. °नानीति. ५ क. ख. छ. त. द. °रः । ऐन्द्रे. ६ ग. इति । वा°. ७ ग. घ. ज. ठ. ड. प्रत्तं, ट. प्रत्तं श्ये° पं. ८ ग ज. °माधेण.

देवशुनीन्द्रेण प्रहिता पणिभिरसुरैः समूद[2] इत्याख्यानं सरस्वती व्याख्याता तस्या एषा भवति ॥ २५ ॥

---

किमिच्छन्तीति[3] । देवपणयः किलासुराः देवगवीरपजह्रुः । ततः किलेन्द्रस्तदन्वेषणाय तदालयं सरमां प्राहिणोत् । सा च देवशुनी पणयस्तां दृष्ट्वा पप्रच्छुरनयर्चा 'किमिच्छन्ती सरमा' इति । इदमस्मन्निवासस्थानं सरमा किमिच्छन्ती किमस्मत्तः प्रार्थयन्ती प्रानट् प्राप्तवती कदाचिदप्यनागतपूर्वेति । अपि च । दूरे ह्यध्वा । महदेतदध्वानं न गच्छता शक्यमागन्तुम् । य एव जगुरिः स्यात् भृशं गन्ता स एव शक्त आगन्तुम् । पराचैः पराञ्चनैरचितैः पराङ्मुखैः अञ्चनैर्गमनैः अचितो गतो विप्रकृष्टो देवनिवासात् । यतो ब्रूमः । हे सरमे कास्मे हितिः । का तव अस्मास्वर्थहितिः अर्थस्थापनम् । कोऽस्मत्तोऽर्थस्तव प्राप्तव्योऽभिप्रेत आसीद्येनायमतिमहानध्वा व्यवसित आगन्तुम् । कीं परितक्म्यासीत् । किं परितक्म । अपि सुखा रात्रिः अन्तरा तवासीत् । परितक्म्या रात्रिः । 'तक्मेत्युष्णनाम' तकतेर्गत्यर्थस्य । सर्वतो हि तत्र भवति । तदेनामुभयतः परिगृह्य वर्तते इति परितक्म्या रात्रिः । अपि च । कथं रसाया अतरः पयांसि । रसा नाम नदी अनेकयोजनविस्तारा । तस्याः पयांस्यतिदुस्तराणि कथमतरः कथं तीर्णवत्यसि । अथवा । कतरमानि तान्युदकानि । अपि नाम स्वादूनि । अपि श्रान्ताया अन्तरा वासाः केष्वासन्निति ।

'देवशुनीन्द्रेण प्रहिता' इति निदानग्रन्थानां मन्त्रार्थाभिव्यक्तये । समूद संवाद कृतवतीत्यर्थः । इत्याख्यानविद एव मन्यन्ते ।

वाक्पक्षे तु चिरकालीनवृष्ट्युपरमे कदाचिदभिनवमेघमवेक्ष्य सहसैव

वाक्पक्षे ऋचोऽर्थः

वृष्टिमुपश्रुत्य कुत इयं माध्यमिका वाक् चिरेणागतेति विस्मितस्तामभ्यमुखमिव ब्रवीति 'किमिच्छन्ती सरमा' इति । इदमस्मत्स्थानं चिरमनागम्य

---

१ छ. समूदु २ क ग ४ (२५), त. ङ. २४. ३ ग °न्तीति । दे°. ४ क. ख. ग ट. ठ. ङ. °स्य मि. । . ५ क. ख. ग. ट ठ. ङ. अपि च । का°, घ. °नां अपि च ६ च. तस्मा° कथा. ७ क. ख. ग. ट ट. ङ. अपि नाम सु°, घ अपि च सु' नाम. ८ क ग. ट ठ. ङ. अन्तरा, घ. अन्त° न. ९ घ. °रमा.

-सरमा माध्यमिका वाक् किमिच्छन्ती प्राप्नत् प्राप्तवती । अपि च । दूरे ह्यध्वा । चिरकालश्रुतेयमसमाभिः । जगुरिः भृशं यो गन्ता स्यात्सा चिरविच्छिन्नमेतद्-ध्वगमं पुनरागच्छेत् । पतनुयात्संर चैः परेडुमुखैः एतदचिन्त्यम् । चिरनष्ट-मिन्धर्ः । अपि च । कर्‍हितिः । किमस्मोत्स्वर्थमिधानमासीत्पूर्वं तव हे सरमे येनागमः । किं वा न जातं येनापुनरागमः । अपि च । चिरप्रो-षितायास्तव किं परितकनमासीत् । अन्तरिक्षनद्या अपि महत्या रसायाः कथमतरः पयांसि । कथमतिबहून्युदकानि संक्षोभ्यात्मानं प्रतिलब्धव-त्यसि । 'वाग्वै सरमा' ( मैत्रा० सं० ४ । ६ । ४ ) इति हि विज्ञायते ।

सरस्वती ( १८ ) व्याख्याता नदीवत् ( निरु० २ । २३ ) इति । 'तद्देवतावत्' इत्युक्तमिद तत् । 'तस्या एषा भवति' ॥ २५ ॥

---

पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ( ऋ० सं० १ । ३ । १० ) ॥ पावका नः सरस्वत्यन्नैरन्नवती यज्ञं वष्टु धियावसुः कर्मवसुस्तस्या एषापरा भवति ॥ २६ ॥

---

पावका नः सरस्वतीति । मधुच्छन्दस आर्षम् । प्रउगे विनियोगः

सरस्वती ( आश्व० श्रौ० २ । ८ ) । सारस्वते हविषि च ( मैत्रा० सं० २ । १ । ७ ॥ ३ । ५ । २ ॥ २ । ५ । ४ ॥ ४ । ७ । ८ ) । पावका प्रक्षालयन्त्युदकेन । का पुनरसाविति । सरस्वती माध्यमिका वाक् । वाजेभिर्वाजिनीवती । अन्नेन हविषे दकेन वा तद्वती । यज्ञमेनमस्माकं वाजेभिः अन्नैः युक्तं वष्टु कामयताम् । अथवा । ऋगादिभावमापन्ना देवान्प्रति वहतु । वक्ष्यति हि 'ता विश्वरूपाः पशवो वदन्ति' ( निरु० ११ । २९ ) इति । धियावसुः कर्मधना । 'तस्या एषा अपरा भवति' स्कुन्नरोदकाद्भिः ॥ २६ ॥

---

१०. ज मादृमु°. २ ग ज. °मम्मन्त्व थां°; घ. °मस्मैत्स्विथा स्माग्र. ३ क ख. घ. ट. ठ. ड च. °वत्यसीति वा । च. ७ ग. घ. द५, क. म. ४ (२५). ठ. ड. °वा । इति निरुक्तभाष्ये ५ ध्याये २५ खण्डः; ग घ. दर्जमिनर ध्यद्दो नास्ति. ५ ज. ( ५ २ ), त. द. ५ ६ ग इति । म°; ठ ड. पावका न इति ७ क. ख. घ. ट. ठ. ड. सारस्वते च हविषि च. °स्वतेऽह° ख. ८ क. ख. ५ ( २६ ), ठ. ड. °इति । इति निरुक्तभाष्ये ५ ध्याये २६ खण्डः; ग. घ. कर्मेमितरेष्वद्दो नास्ति.

१२

महो अर्णः सरस्वती प्रचेतयति केतुना । धियो विश्वा विराजति ( ऋ० सं० १ । ३ । १२ ) ॥ महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया वमानि च सर्वाणि प्रज्ञानान्यभिविराजति वागर्थेषु विधीयते तस्मान्माध्यमिकां वाचं मन्यन्ते वाग्व्याख्याता तस्या एषा भवति ॥ २७ ॥

---

महो अर्णः सरस्वतीति[3] । पूर्ववदार्षं विनियोगश्च । महो अर्णो महदुदकं सरस्वती माध्यमिका वाक् । किं करोति । प्रचेतयति प्रज्ञापयति आविःकरोति [4]वर्षभावेन । केन पुनराविःकरोति । केतुना स्वेन कर्मणा प्रज्ञया वा । न ह्यप्रज्ञानवत्यवलिप्ता चैनच्छक्ता कर्तुम् । एवं चोदकमाविःकुर्वती धियो विश्वा विराजति । सर्वाणि प्रज्ञानान्यभिविराजति । कथम् । उदकादन्नमन्नात्प्रज्ञानमित्येवं सर्वप्रज्ञानानामसावीष्ट इति ।

सैव सरस्वती

' वागर्थेषु विधीयते ' इत्युपपत्तिवचनम् । के पुनर्वाचोऽर्थाः । ' चतस्र ऊर्जं दुदुहे पयांसि ' ( निरु० ११ । २८ ) इत्येवमादय उदकविकारलक्षणाः । तेष्वयमपि सरस्वती विधीयते ' महो अर्णः ' इत्येवमादिषु । ' तस्मान्माध्यमिकां वाचं मन्यते ' नैरुक्ताः ।

सरस्वती माध्यमिका वाक्

' वाक् ' (१९) वक्तव्या । सा पुनः ' व्याख्याता ' ' वचेः ' ( निरु० २ । २३ ) इति । ' तस्या एषा भवति ' ॥ २७ ॥

---

यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा । चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ( ऋ० सं० ८ । १०० । १० ) ॥ यद्वाग्वदन्त्यविचेतनान्यविज्ञातानि राष्ट्री देवानां निषसाद मन्द्रा मदना चतस्रोऽनु दिश ऊर्जं दुदुहे पया-

---

१ छ. स. द. °गि भूतान्यभि°. २ क. स. ६(२१) त. इ. ६. ३ ग. °तीति । ४ पू°. ४ क. स. ६ (-७); ठ. ड. °पनि' इति निरुक्तभाष्ये ५ ध्याये २७ खण्डः; ग. च. ४र्भमिनरोऽवसो नास्ति.

सिं क स्विदस्याः परमं जगामेति यत्पृथ्वीं गच्छन्तीति वा यदादित्यरश्मयो हरन्तीति वा तस्या एषापरा भवति ॥ २८ ॥

---

वाक्

यद्वाग्वदन्तीति[1] । [2]नैगमस्यार्थम् । सारस्वते पशौ विनियोगः ( आश्व० श्रौ० ३ । ८ ) । यदा माध्यमिका वाग्वदन्ती नि[3]श्चिन्वती । कानि । अविचेतनानि अविज्ञातार्थानि शब्दरूपाणि स्तनयित्नुलक्षणानि । राष्ट्री ईश्वरी[4] माध्यमिकानां देवतानाम् । निषसाद निषीदति व्याप्नोति आत्मानं वर्षकर्मणि मन्द्रा मदना हर्षकरी तर्पयित्री[5] वा लोकस्य । अथ तदा । किमिति । चतस्र ऊर्जं दुदुहे पयांसि । चतस्रो दिशः प्रति अनुदिशश्च दुदुहे दुग्धे प्रक्षरति ऊर्जम् अन्नं पयांसि उदकानि । तेषां च पयसां क्व स्विदस्याः परमं जगाम । केन[6] निष्पाद्यौषधीर्गच्छन्ति कुतो वा प्रतिसंवत्सरं पुनरागच्छन्तीति कस्तत्त्वं[7] जगाम जानाति[8] यानि पृथिव्यामवनिष्ठन्ते यानि चादित्यरश्मयो[9] हरन्तीति एवमनुपक्षीणपयस्केयमिति श्रूयते[10] ।

' तस्या एषापरा भवति ' । सा पुनः किमर्थम् । इयमेव वाक्सर्वप्राण्यन्तर्गता माध्यमिका सर्वार्थाभिवादिनी भवतीति विभूतिप्रदर्शनार्थम्[11] ॥ २८ ॥

---

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ( ऋ० सं० ८ । १०० । ११ ) ॥ देवीं वाचमजनयन्त देवास्तां सर्वरूपाः

---

१ क. ख. ७ (२८), च. ड. ७ २ ग. °न्तीति । नै°. ३ क. ख. घ. ट. °चयन्ती; च. °चरन्ती य; ठ. ड. प्रज्ञापयन्ती. ४ ग. ज. °रा या माध्य°; घ. °रा च माध्य° या; ठ. ड. °श्वरी माध्य°. ५ ग. ज. °यित्री, च. °यित्री श्री. ६ ग. ज. °गति पशं; च. °रति°पशा° ऊर्जमन्नं. ७ क. ख. घ. ट. ठ. ड. केन नि नि°. ८ ग. ज. जानाति जगाम; ट. ड. ठ. ड. जगाम जनाति । यानि°; च. जानाति. जगाम ९ क. ख. घ. ट. ठ. ड. चादि°; च. वादि° या. १० ग. ज. °मिति निरुच्यते. ११ क. ख. ७ (२८); ठ. ड. °नार्थम् । इति निरुक्तभाष्ये °ध्याये २८ खण्डः; ग. ध. वर्गमिनेष्विडो नास्ति.

पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च सा नो मन्द्रेषमूर्जं च रसं च दुहाना धेनुर्वागस्मानुपैतु सुष्टुतानुमती राकेति देवपत्न्याविति नैरुक्ताः पौर्णमास्याविति याज्ञिका या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राकेति विज्ञायतेऽनुमतिरनुमननात्तस्या एषा भवति ॥ २९ ॥

---

देवीं वाचमजनयन्तेति । तदेवार्षम् । देवीं दातीमुदकानां या वाचम् अजनयन्त माध्यमिका देवास्तामिमेतां यथाभिमतर्थाभिवादिका विश्वरूपाः सर्वरूपाः पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च । व्यक्तवाचो मनुष्यादयोऽव्यक्तवाचो गवादयः । येयं सर्वपशुभिरुच्यते सा नः सास्माकं मन्द्रा मदना ईषं चोर्जं च दुहाना प्रक्षरन्ती धेनुः तर्पयित्री वागस्मानुपैतु सुष्टुतेत्येनदाशास्महे ।

वागेव

' अनुमती राकेति देवपत्न्याविति नैरुक्ताः ' । सह पदयोरभ्यासस्तुल्योऽनयोरभिधेयविचार इति । मध्यस्थाने देवपत्न्याविति निर्णीते तदभिधाने इति नैरुक्ताः । पौर्णमास्याविति याज्ञिकाः । ते च ब्राह्मणमुदाहरन्ति ' या पूर्वा पौर्णमासी ' ( ऐ० ब्रा० ३२ । ९ ) इत्येवमादि । कालाविदैवते चन्द्रमहचारिण्याविति मध्यस्थाने । पौर्णमास्यमावास्ययोर्नक्षत्रेष्टकामध्य उपधानात् ( तै० सं० ३ । ५ । १ ॥ ४ । ४ । १० ) नक्षत्रत्वम् । अतश्च प्रदर्शनात्सर्व एवायं ज्योतिर्गणो ग्रहनक्षत्रतारकारूपो रसप्रायो मूर्तिमान्मध्यस्थान एवेति लक्ष्यते ।

अनुमतिः राका च देवपत्न्यौ इति नैरुक्ताः

पौर्णमास्यौ इति याज्ञिकाः

' अनुमतिः ( २० ) अनुमननात् ' । अनुमता किलेयमृषिभिर्दैवे-

---

१ छ. त. द. मनना°. २ क ख. ८ ( २१ ); त. द. ९. ३ ग. °न्तेति। त°; ठ. ड. वाचमिति. ४ ग. ज. दातृम्°; च. दातृमु° श्री. ५ क. ख. घ. ट. ठ. ट. °न्ति तत्पूर्वकत्वादात्मप्रवृत्तेः ६ क. ख. ग. ट. ठ. ड. इयम् अन्नं पयोघृतादिरूपं रस च ऊ°; च. इषंन्वा° अन्न पयोघृतादिरूपं रस. ७ क. ख. घ. ट. ठ. ड. सुष्टु स्तुते°; च. सुष्टुते° सुष्टु स्तु ८ ग. ज. भवम्°.

अनुमतिः कस्मात् चातुर्दश्यके पक्षेऽस्त्रियं पौर्णमासीति । ' तस्या एषा भवति ' ॥ २९ ॥

---

अन्विदनुमते त्वं मन्यासै शं च नस्कृधि । क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषः ( तै० सं० ३ । ३ । ११ ) ॥ अनुमन्यस्वानुमते त्वं सुखं च नः कुर्वन्नं च नोऽपत्याय धेहि प्रवर्धय च न आयू राका रातेर्दानकर्मणस्तस्या एषा भवति ॥ ३० ॥

---

अन्विदनुमत इति । वामदेवस्यार्षम् । देविकासु विनियोगः ( मैत्रा० सं० ४ । ६ । ४ ) । हे अनुमते त्वम् अनुमन्यासै अनुमन्यस्व अस्माकं यदनुमन्तव्यं त्वया । शं च नस्कृधि । सुखं चास्माकं कुरु । इषम् अन्नं चास्माकं तोकाय अपत्याय धेहि । आयूंषि च नः प्रतारिषः प्रवर्धितानि कुर्वित्येतदाशास्महे ।

सैव पौर्णमासी पञ्चदशके पक्षे ' राका ' ( २१ ) इत्युच्यते । सा राका कस्मात् पुनः कस्मात् । ' रातेर्दानकर्मणः ' । हविर्दाननिमित्तं हि सा भवति । ' तस्या एषा भवति ॥ ३० ॥

---

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ( ऋ० सं० २ । ३२ । ४ ) ॥ राकामहं सुह्वानां सुष्टुत्याह्वये

१ क. ख. ८ ( २१ ), ३. ख. 'वति । इति निरुक्तभाष्ये ९ दशावे ९१ मारः, ग. घ. वर्जमितीयमुक्तौ नास्ति. २ क. ख. ५ ( ३० ); ग. इ. ५-२ क. ड ने । वा ; ३. ख. मे रूचिति. ४ क. ख. घ. ट. ड. ढ. कुरु वर्धयेत्ये'; ५ ख इदित्य' • वर्धते', ६ क. ख. ९ (३१), ८ ड. 'वति । इति निरुक्तभाष्ये

शृणोतु नः सुभगा बोधत्वात्मना सीव्यत्वपः प्रजननकर्म सूच्या-च्छिद्यमानया सूची सीव्यतेर्ददातु वीरं शतदमुक्थ्यं वक्तव्यप्रशंसं सिनीवाली कुहूरिति देवपत्न्याविति नैरुक्ता अमावास्ये इति याज्ञिका या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूरिति विज्ञायते सिनीवाली सिनमन्नं भवति सिनाति भूतानि वालं पर्व वृणोतेस्तस्मिन्नन्नवती वालिनी वा वालेनेवास्यामणुत्वाच्चन्द्रमाः सेवितव्यो भवतीति वा तस्या एषा भवति ॥ ३१ ॥

---

राकामहं सुहवामिति। गृत्समदस्यार्षम्। देविकासु विनियोगः (मैत्रा० सं० २। ६। ४)। राकामहं सुहवां स्वाह्वानां यस्याः शोभनमाह्वानं तां सुष्टुत्या शोभनया स्तुत्या आह्वये। सा पुनः सुभगा सुधनास्माभिराहूयमाना शृणोतु। श्रुत्वा च बोधतु। कर्तव्यतया तदवगच्छतु। यदपि च न ब्रूमहे तदपि आत्मना एव बुध्यताम्। अपि चेदमुच्यते। एवं सीव्यतु अपः। सतनोतु प्रजननकर्म अस्माकम्। सूच्या अच्छिद्यमानया अविच्छिन्नेन प्रजासंतनेन। न च पुनः प्रजामात्रमर्थयामहे। किं तर्हि। ददातु वीरं पुत्रम्। किंलक्षणम्। शतदायं बहुप्रदम्। उक्थ्यम् वक्तव्यप्रशसं च अपरिसमाप्तस्तुतिम्।

राका

'सिनीवाली कुहूः' इति पूर्ववदुपन्यासः। 'अमावास्ये इति याज्ञिकाः'। तथैव ब्राह्मणमपि चोदाहरन्ति। 'तथैव पूर्वा सिनीवाली उत्तरा कुहूः' (ऐ० ब्रा० ३२। ९॥ मैत्र० सं० ४। ३। ५)।

'सिनीवाली' (२२) कस्मात्। 'सिनमन्नं भवति'। तत्कस्मात्। 'सिनाति' बध्नाति 'भूतानि' रसादिभिर्धातुभिः। 'वालं' किमुच्यते। 'पर्व'। तत्कस्मात्। 'वृणोतेः'। वृण्वन्ति देवास्तत्र हवींषि। 'तस्मिन्' पर्वण्यसौ सिनिनी 'अन्नवती' इति सिनीवाली। अथवोत्तरपदे विकल्पः। 'वालिनी' वाले-

सिनीवाली कस्मात्
सिनम्
वालम्

---

१ क. ग. ङ घ. ध ट. ढ सेवित°. २ क. ख १० (३१), त. द. १०. ३ ग. °मिति। गृ°, ठ ड. °महमिति. ४ क. ख. ग. ङ ठ. ढ. सा च पुं°; घ. सा °पु° च. ५ क. ख घ. ट. ट ड 'च' नास्ति, घ. चै. ६ ख. ग. ङ. वाले°.

स्तद्वनी । सिनिनी च सा वालिनी चेति सिनीवाली । औपमिक वा । कथमिति । 'वालेनवास्यामणु राचन्द्रमाः सेतव्यो' वेदव्यो 'भवति'। एवमणुरसौ चन्द्रमा भवत्यस्या येन ज्ञायते वालेनाप्यय सीयेत वेध्येतेति । 'तस्या एषा भवति' ॥ ३१ ॥

---

सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ( ऋ० सं० २ । ३२ । ६ )॥ सिनीवालि पृथुजघने स्तुकस्त्यायतेः संघातः पृथुकेशस्तुके पृथुष्टुते वा या त्वं देवानामसि स्वसा स्वसा सु असा स्वेषु सीदतीति वा जुषस्व हव्यमाहुतं प्रजां च देवि दिश नः ह्वहूर्गूहतेः काभूदिति वा क सती हूयत इति वा काहूतं हविर्जुहोतीति वा तस्या एषा भवति ॥ ३२ ॥

---

सिनीवालि पृथुष्टुके इति । गृत्समदस्यार्षम् । देविकासु विनियोगः ( मेत्रा० स० २ । ६ । ४ ) । हे सिनीवालि पृथुष्टुके विस्तीर्णजघने । अथवा । पृथुष्टुके पृथुकेशस्तुके पृथुकेशकलापे । अथवा । पृथुष्टुते । या त्व देवानां स्वसा भगिनी माध्यमकाना सा त्वं जुषस्व आसेवस्व एतत् हव्यम् आहुतं मर्यादया विधानतो हुतमस्माभि । आसेव्य च प्रजामस्माक दिश अतिसृज देहीत्याशास्महे ।

सिनीवली

कूहूः कस्मात्

'कुहूः (२३) गूहतेः'। निगूहत्यसौ चन्द्रमसम्। 'काभूदिति वा'। तस्यामप्रत्यक्षत्वाद्वितर्क्यश्चन्द्रमा भवति [1] कासावभूद्येति [2]। 'क सती हूयते इति वा'। सैवात्मना देवताभावादप्रत्यक्षा [3] न ज्ञायते कापि सत्याहूयत इति। अतो वितर्क्या भवति। 'तस्या एषा भवति'॥ ३२ [4]॥

---

कुहूमहं [5] सुकृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि । सा नो ददातु श्रवणं पितॄणां [6] तस्यै ते देवि हविषा विधेम (मैत्रा० सं० ४ । १२ । ६)॥ कुहूमहं सुकृतं विदितकर्माणमस्मिन्यज्ञे सुह्वानामाह्वये सा नो ददातु श्रवणं पितॄणां पित्र्यं धनमिति वा पित्र्यं यश इति वा तस्यै ते देवि हविषा विधेमेति व्याख्यातं यमी व्याख्याता तस्या एषा भवति॥ ३३ [7]॥

---

कुहूः

कुहूमहं सुकृतमिति। देविकासु विनियोगः (मैत्रा० सं० २ । ६ । ४)। कुहूमहं सुकृतं शोभनानां कर्मणां कर्त्रीं विद्मनापसं सर्वत्र प्रत्यक्षकर्माणम् अस्मिन्यज्ञे सुहवां स्वाह्वानां शोभनमाह्वानं यस्यास्तां जोहवीमि अह्वयामि। सा अस्माभिराहूतास्मिन्यज्ञ एव हविर्भुक्त्वा अस्माकं ददातु श्रवणं पितॄणां 'पित्र्यं धनमिति वा पित्र्यं वा यशः'। कुलोचितमित्यर्थः। प्रत्यक्षीकृत्योत्तरेण पादेनास्तौत्। या त्वमस्माकमेतत्करोषि तस्यै तुभ्यं हे देवि कुहु हविषा विधेम। दद्म [12] इत्यर्थः। अथवा। त्वां [13] हविषा परिचरेमेति।

---

१ च. कीना° का २ क. ख. ग. ज. थ. ठ. ढ. दस्येति; च. ट. 'दस्य° ले. ३ ग. च. ज °क्षात्र ज्ञा°; ठ. ढ. °क्षात्त ज्ञा°. ४ क. ख. ११ (३२); ठ. ढ. °वति । इति निरुक्तभाष्ये पञ्चमाध्याये ३२ खण्डः; ग. च.वर्जमितरखण्डो नास्ति. ५ क. ख. ङ. थ. ध. ठ.ढ. सुवृतं. ६ क. ख. पितृणां. ७ क. ख. १२ (३३); त. द. १२. ८ क. ख. ध. ट. सुवृत°; ग. सुकृतमिति । दे°; ठ ढ. °अहमिति. ९ ट. ढ सुवृतं. १० ग. ज. पित्र्यं यश ; च. पित्र्यं य° वा ११ ग. ज. °मद्म इत्यर्थ°; ग. दद्म इत्यर्थः 'हावर्द् १२ क. ख. घ. ट. ट. ढ. ता त्वां; घ. त्वां° तां. १३ क. ख. घ. ट. ट. ढ. °चराम इति; च °चरेम इ° त.

'यमी (२४) व्याख्याता' यमेन (निरु० १०।१९)। लिङ्गमात्रविशेषः। "तस्या एषा भवति" ॥ ३३ ॥

---

अन्यमू षु त्वं यम्यन्य उ त्वां परि ष्वजाते लिबुजेव वृक्षम्। तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम् (ऋ० सं १०। १०। १४) ॥ अन्यमेव हि त्वं यम्यन्यस्त्वां परिष्वङ्क्ष्यते लिबुजेव वृक्षं तस्य वा त्वं मन इच्छ स वा तवाधानेन कुरुष्व संविदं सुभद्रां कल्याणभद्रां यमी यमं चकमे तां प्रत्याचचक्षेत्याख्यानम् ॥ ३४ ॥

एकादशाध्यायस्य तृतीयः पादः ॥

---

अन्यमू षु त्वं यम्यन्य इति। यमी किल यमं चकमे भ्रातरम्। तां किल यमोऽनयर्चा प्रत्याचचक्षे। कथम्। हे यमि अन्यमू षु त्वम् अन्यमेव त्वं परिष्वजस्व मैथुनाभिप्रायेण। लिबुजेव वृक्षं वल्लीव काचिद्वृन्दं समीपजं वृक्षम्। अन्य एव त्वां परिष्वजतां यस्य योग्या त्वमनेनाभिप्रायेण परिष्वक्तुम्। तस्य वा त्वं मन इच्छ। तस्य च त्वं मनः प्रवेष्टुमिच्छ। स वा तव। अथैवमेकचित्यमुपगम्यमानेन समानेन सह कृणुष्व संविदं सङ्कल्पादिमैथुनकार्यम्। सुभद्रां कल्याणभद्रां संविदमुभयलोकाविरोधिनीमित्यभिप्रायः।

यमी

नित्यपक्षे तु माध्यमिको यमो माध्यमिकां वाचमुपसमाप्तमनःप्रतिभक्तामिव कृत्वोभयस्थानां तां ब्रवीति। हे यमि अतीतस्तेऽयम परिष्वङ्गसमयः। प्रभातमिदानीम्। लिबुजेव वृक्षं द्युस्थानं परिष्वक्तुमिच्छ। तस्य च त्वं मनः प्रकाशमनुप्रवेष्टुमिच्छ। स च तव प्रकाशमनुप्रविशतु। अथै-

माध्यमिकपक्षे यमी उषाः

---

१ क. ख. १० (३३); ठ. ह. °यमि। इति निरुक्तभाष्ये पञ्चमध्याये ३२ खण्डः; ग. घ. वर्जमिनेत्यङ्को नास्ति. २ छ. इच्छा, त. इच्छाँ स° छ ३ छ. त. द. °ष्यङ्केतम°. ४ क. ख. १३ (३४), त. द. १३. ५ छ; द. तृती°; त. एकादशाध्याये तृ°; ङ. थ ध. ट. ह. 'एका॰ पादः' नास्ति. ६ ग इति°। थ°; ठ. ङ. अन्यमू षिति. ७ क. ख. संकल्पा०; ग. ट. संजल्पा°. ८ ग. ज. °पक्षे मा°. ९ क. ख. माध्यमिको. १० ग. ज. °मिच्छति सा च मनः प्रकाशमनुप्रवेष्टु तस्य°, घ. °मिच्छति सा च मनः प्रकाशमनुप्रविष्टा तस्य°. ११ घ. ट. ठ. ङ. °तुमर्हि°.

३१

वमितरेतरसंपर्कात्तेन सहैकीभूता लोकोपकाराय कुरुष्व परस्परसंविदं संवित्साधनं प्रकाशमिति ॥ ३४ ॥

पैञ्शाध्यायस्य तृतीयः पादः ।

---

चतुर्थः पादः ।

उर्वशी व्याख्याता तस्या एषा भवति ॥ ३५[2] ॥

'उर्वशी[3] व्याख्याता' । 'उर्वशी' ( २५ ) वक्तव्या । सा पुनः 'व्याख्याता' । तदिहापि देवतायां योऽयम् ।' उर्वभ्यश्नुते' । बहूदकं व्याप्नोति । 'उरु[4] वा यशोऽस्याः' । महानस्याः काम उदके ( निरु० ५ । १३ ) । 'तस्या एषा भवति' ॥ ३५ ॥

---

विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि । जनिष्ठो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ( ऋ० सं० १० । ९५ । १० )॥ विद्युदिव या पतन्त्यद्योतत हरन्ती मे अप्या काम्यान्युदकान्यन्तरिक्षलोकस्य यदा नूनमयं जायेतापोऽध्यप इति नैर्यो मनुष्यो नृभ्यो हितो नरापत्यमिति वा सुजातः सुजाततरोऽथोर्वशी प्रवर्धयते[6] दीर्घमायुः पृथिवी व्याख्याता तस्या एषा भवति ॥ ३६ ॥

---

विद्युन्न या पतन्तीति[7] । मध्यमः पुरूरवाः निरुपक्षे मैनीनि । आत्मनो ज्योतिषः शब्दस्य च विभागमिव कृत्वा । विद्युन्न विद्युदिव । संप्रत्यर्थे वा नकारः ।

उर्वशी

किमिति । या पतन्ती गच्छन्त्यन्तरिक्षे मेघोदरेषु दविद्योत् पुनःपुनर्द्योतते पुनःपुनरात्मानं प्रतिलभते । कथम् । भरन्ती हरन्ती मे मम स्वभूतानि

---

१ क. ख १३ ( ३४ ), ठ ड. °मिति । १३ ध्यायस्य ३ पादः । ३४; ग. च. वर्जमितरेष्वङ्को नास्ति. २ क. ख. १ ( ३५ ); ठ ड. १. ३ क. ख. घ. ट. ठ. ड. 'उर्वशी व्याख्याता' नास्ति; च. उर्वशी व्याख्याता. ४ क. ख. १ ( ३५ ); ठ. ड. °वति° । इति निरुक्तभाष्ये ५ ध्याये ३५ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ५ छ मर्ते. ६ क. ख. २ ( ३० ), ठ. ड. १. ७ ग. °न्तीति । म°

अप्या अप्यानि काम्यानि उदकानि अन्तरिक्षरमाणानि[1] अन्तरिक्षलोकस्य अधिपत्नी योर्वशी सा यदैवमुदकानि हरन्ती मेघेभ्यः पतन्ती भृशं स्वयं विद्योतते नूनं निश्चयेन तदा जनिष्टो अपः अप्यपः अधिक उदकोर्मिर्जायते यः सर्वमिदमाच्छादयति नर्यो नृभ्यो हितः पथ्यः[2] सस्यसंपत्करः। 'नरापत्यमिति वा' इत्यैतिहासिकपक्षं द्योतयति। सुजातः सुजाततरः शोभनादपि शोभनतरः उदकोर्मिः। अथ तेन महतोदकोर्मिणा सस्यमभिनिष्पाद्य लोकस्यान्नसंप्रदानद्वारेण प्रोर्वशी तिरते[3] प्रतिरते प्रवर्धयते दीर्घमायुः।

ऐतिहासिकपक्षे स्वैरैः[4] पुरूरवाः[5] उर्वश्या अप्सरसा वियुक्तो ब्रवीति।

**ऐतिहासिकपक्षे अर्थः** विद्युदिव या पतन्ती अद्योतत भृशं वपुष्मत्तया भरन्ती धारयन्ती अनेकानि स्त्रीगतानि हारभावादीनि काम्यानि वस्तूनि मे मम अप्या नित्यमासव्या प्रिया। सा च पुनराहितगर्भा यतोऽतो ब्रवीमि। जनिष्टो अपः निश्चयेन जनिष्यते अप्यपः अधिककर्मा नर्यः नृभ्यो हितः सम्यक्परिपालयिता नराणाम्। अथवा। मम नरस्यापत्यमायुर्नाम[6] राजा यं पुराणविदः कथयन्ति। सुजातो मच्छुक्रात् वीर्यवतो जातो विशेषत उर्वश्याः क्षेत्रगुणात्सुजाततरः। तस्य चावश्यमुर्वश्यप्सरसानिष्टेऽपि प्रवर्धयते तद्योग्यैः कर्मभिर्दीर्घमायुरिति।

'पृथिवी(३६)व्याख्याता'। 'अथ वै दर्शनेन पृथुः'(निरु० १।१४)[7] इत्यत्र[8]। इह तु माध्यमिका। 'तस्या एषा भवति' ॥ ३६ ॥

---

बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि। प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि (ऋ० सं० ५।८४।१)॥ सत्यं त्वं पर्वतानां मेघानां खेदनं छेदनं भेदनं बलमत्र धारयसि पृथिवि

---

१ क. ख. घ. ट. ठ ड अन्तरमाणा°; च. अन्तरिक्ष°. २ क. ख. घ. ट. ठ. ड. °हितः सम्य°, च. पंथ्यैः. ३ ग. ज. प्रोर्वशी प्रे; च प्रोर्वशी प्र° तिरते. ४ ट. ठ. ड. स्वैरं. ५ ग ज. पुरोरवाः, च. पुरूरोरवाः° स्व. ६ घ. ट. ठ. ड. नरपस्या°; च. नरस्या° प. ७ क. ख. २ (३६), ठ ड. °इति। इति निरुक्तोदरपट्के ५ध्याये ३६ खण्ड., ग च वर्गमिन्येतदञ्जो नास्ति. ८ क. ख. छ. ज. ट. न बळित्था.

प्रजिन्वसि या भूमिं प्रवणवति महत्त्वेन महतीत्युदकवतीति वेन्द्राणीन्द्रस्य पत्नी तस्या एषा भवति ॥ २७ ॥

---

बळित्था पर्वतानामिति । अत्रेरार्षम् । बळ् इति सत्यस्य नाम (निघ० २।१०।१)। इत्थेति अमुत्रेत्यर्थः । हे

पृथिवी

पृथिवि माध्यमिके सत्यं यथाभूतम् अमुत्र अमुष्मिन्नन्तरिक्षलोके वर्तमाना खिद्रं खेदनं छेदनं येन पर्वताः मेघाश्छेत्तुं शक्यन्ते तद् बलं बिभर्षि धारयसि । हे प्रवत्वति प्रवणवति गमनवति या त्वं भूमिं प्रजिन्वसि वर्षमुत्सृजन्ती मह्ना महत्त्वेन हे महिनि महति । अथवा । उदकवति । या त्वमेवं भूमिं प्रजिन्वसि सा कथं न मेघानां पर्वतानां छेदनसमर्थं बलं धारयिष्यसीत्यभिप्रायः ।

पृथिवि इयं भूमिं प्रजिन्वसीति व्यपदेशान्मध्यस्थाना । हिरण्यनाशोध्या

यास्काभिप्रायो मैत्रायणीसंहितायां दत्तविनियोगेन विरुद्धः

भौमस्यैकरूपालस्येयं याज्या (मैत्रा० सं० ४ १२।२)। तत्र विज्ञायते । 'अथ यद्भौमोऽस्या हि स तदविन्दत्' (मैत्रा० सं० २।२।७) इति । तेन तत्रेयं भूमिरिज्यते । न च भूमिरस्यामृचि प्रधानत्वेन वर्तते । यथा चायमाचार्यो निराह तदयमस्योदाहरणाभिप्रायः । स च विनियोग इति विरोधः । अविरोधमेनयोर्मेधाविनः समनुगंस्यन्ते ।

'इन्द्राणी (२७) इन्द्रस्य पत्नी' । इन्द्रस्य विभूतिः पृथक्त्वे वा

इन्द्राणी कस्मात् निर्ज्ञाता पौराणिकैः । 'तस्या एषा भवति' ॥२७॥

---

१ छ. ड. प्रणवति, त. प्रवणवति, ठ. प्रवति. २ क. ख. ३ (२७); त. द. ३. ३ क. ख. ग. च. ज. व. बलित्था. ४ म °मिति । अ°. ५ ठ. ड. बद्. ६ क. ख. घ. ट. ठ. ड. सत्यनाम. ७ ग. ज त्वमुत्र; च. त्वमुत्र. ८ च. प्रवणवति° व. ९ क. ख घ. ट. त. ड. धारयिष्यसि । अवश्यं धारये°; च. धारय° यिष्यसि । अवश्यं धार. १० क. ख. घ. इत्यविरोधोऽनयो°; च. इत्यविरोधः । अभिमन्त्रेति । विरोधमेन° अधममानार्थो मे, ट. इत्यविरोधः अनयो° असमानार्थो म इति पाठः । इति निरोधः अशक्यंति विरोधमेनयोर्मेधाविनः समनुगंस्यन्ते इति वा पाठः, ठ. ड. इत्यविरोधः । इति विरोधः अशक्यंति विरोधमेनयोर्मेधाविनः समनुगस्यन्ते इति वा पाठः. ११ क. ख. घ. ट. °निना स°. १२ क. ख. घ. ट. नुगस्यते; ग. च. ज. °गम्यंते. १३ क. ख. ३ (२७); ठ ड. °वति । इति निरुक्तभाष्ये उत्तरषट्के ५ ऽध्याये २७ खण्डः; ग. घ. वर्जमितरेष्वङ्को नास्ति.

इन्द्राणीमासु नारिषु सुभगामहमश्रवम् । न ह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः (ऋ० सं० १०।८६।११) ॥ इन्द्राणीमासु नारिषु सुभगामहमशृणवं न ह्यस्या अपरामपि समा जरया म्रियते पतिः[3] सर्वस्माद्य इन्द्र उत्तरस्तमेतद्ब्रूमस्तस्या एषापरा भवति ॥ ३८ ॥

---

इन्द्राणीमासु नारिष्विति[1] । वृषाकपेरार्षम् । पृष्ठ्यस्य षष्ठेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे विनियोगः ( अश्व० श्रौ० ८।३ ) । निर्धार्य ब्रवीति । सर्वास्वेव आसु नारीषु इन्द्राणीम् एव अहं सुभगां सौभाग्ययुक्तां लक्षणवतीम् अश्रवम्[2] अशृणवम । केन हेतुना । यत आह । न ह्यस्या अपरं चन । 'हि'शब्दो हेत्वर्थे । चनेत्यप्यर्थे । यस्मादस्या अपरामपि समां संवत्सरं प्रति न कदाचिदपि पतिर्म्रियते नापि जीर्यते यथान्यासां प्राकृतानां नारीणाम् । कतमः पतिः । विश्वस्मात्सर्वस्मात् जगतो य इन्द्रः उत्तरः । योऽयमिन्द्र उद्गततरः । तमेतम् इन्द्रमधिकृत्य ब्रूम इत्याचार्यो ब्रवीति ।

इन्द्राणी

' तस्या एषापरा भवति ' । सा पुनः किमर्थम् । ऋषिर्वृषाकपिः प्रसिद्धः । स पुनरादित्योऽभिप्रेतो नैरुक्तानाम् । तदुपप्रदर्शनायापरामाह ॥ ३८ ॥

---

नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते । यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ( ऋ० सं० १०।८६।१२ )॥ नाहमिन्द्राणि रमे सख्युर्वृषाकपेर्ऋते यस्येदमप्यं हविराप्सु शृतमद्भिः संस्कृतमिति वा प्रियं देवेषु निगच्छति सर्वस्माद्य इन्द्र उत्तरस्तमेतद्ब्रूमो गौरी रोचतेर्ज्वलतिकर्मणोऽयमपी-

---

१ द. ध. नारीषु २ छ. 'मश्रेव' भूग. ३ क. म. ( ३८), त. द. ४.

तरो गौरो वर्ण एतस्मादेव प्रशस्यो भवति तस्या एषा भवति ॥ ३९ ॥

---

नाहमिन्द्राणीति[2]। समानो विनियोगः पूर्वयार्थं[3] च। इन्द्रो ब्रवीति।

इन्द्राण्येव — विभक्तामिवेन्द्राणीमात्मनः कृत्वाह। नाहमिन्द्राणि रारण। न रमे अहम्। सख्युर्वृषाकपेर्ऋते। य एष मम सखा वृषाकपिस्तस्मादृते। किं योऽयमपिर्मनुष्येषु प्रसिद्धः। नेत्युच्यते। यस्येदमप्यं हविः। अप्सु शृतं चरुपुरोडाशादि[4] वा। 'अद्भिः संस्कृतमिति वा'। सोऽस्य मे प्रिय इष्टः सर्वेष्वपि देवेषु। निर्धार्योच्यते। यस्य विशेषतो गच्छति। विश्वस्मात् सर्वस्मात् अपि जगतो योऽहम् इन्द्र उत्तरः उद्गततरः सोऽप्यहमेवं ब्रवीमीति।

'गौरीः (२८) रोचतेः' ज्वलत्यर्थस्य। माध्यमिका वाक्। सा पुनर्दीप्तिमती।

गौरीः कस्मात् — 'अयमपीतरो' यो 'गौरो वर्णः' सोऽपि 'एतस्मादेव' रोचतेः। स दीप्तिरूपत्वात्कृष्णादीनपेक्ष्य 'प्रशस्यो भवति'। 'तस्या एषा भवति' ॥ ३९[5] ॥

---

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् (ऋ० सं० १।१६४।४१)॥ गौरीर्निर्मिमाय सलिलानि तक्षती कुर्वत्येकपदी मध्यमेन द्विपदी मध्यमेन चादित्येन च चतुष्पदी दिग्भिरष्टापदी दिग्भिश्चावान्तरादिग्भिश्च नवपदी दिग्भिश्चावान्तरादिग्भिश्चादित्येन च सहस्राक्षरा बहूदका परमे व्यवने तस्या एषापरा भवति[6] ॥ ४० ॥

---

१ क. ख. ५ (३९); त. द. ५. २ ग. °णीनि। स°. ३ क. ख. °या आर्षं च। इन्द्रो°; घ. ट. °याः आर्षं तु इन्द्रो°, ठ ड. °या अर्थं तु इन्द्रो°. ४ ग. ज. चरु च पु°. ५ क. ख. ५ (३९); ड. ढ. °वति। इति निरुक्तभाष्ये ५ ध्याये ३९ खण्डः; ग. च. वर्णमितोऽन्यो नास्ति. ६ क ख ६ (४०); त. द. ६.

गौरी:

गौरीर्मिमायेति[1] । अस्यवामीये दीर्घतमस आर्षम् । गौरी सर्वमिदं निर्मिमीते । कथम् । सलिलानि तक्षती कुर्वती । उदकपूर्वकत्वात्सर्वनिर्माणस्य । कथमुदकानि कुर्वती । एकपदी बभूवुषी एकपदी भवती मध्यमेन सहैकत्वमपन्ना । द्विपदी मध्यमेन चादित्येन च । चतुष्पदी दिग्भिः अनपेक्ष्येन्द्रादित्यौ । अष्टापदी दिग्भिश्चावान्तरदिग्भिश्च । नवपदी दिग्भिश्चावान्तरदिग्भिश्च सह आदित्येन च । सहस्राक्षरा बहूदका परमे व्यवने । विभक्तानां भूतानां यत्परममवनमेकं सर्वभावानामविभक्त एक आत्मा यस्तदात्मनैवंभूता[3] सलिलनिर्माणद्वारेण सर्वमिदं निर्मिमीते ।

'तस्या एषापरा भवति' । सा पुनः किमर्थमिति । गौरीति गुणाभिधानमप्रसिद्धाभिधेयं छन्दसि देवतायाम्[4] । यतः परया समर्थयति[5] ॥४०॥

---

तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः। ततः क्षरत्यक्षरं तद्विश्वमुप जीवति (ऋ० सं० १ । १६४ । ४२) ॥ तस्याः समुद्रा अधिविक्षरन्ति वर्षन्ति मेघास्तेन जीवन्ति दिगाश्रयाणि भूतानि ततः क्षरत्यक्षरमुदकं तत्सर्वाणि भूतान्युपजीवन्ति गौर्व्याख्याता[6] तस्या एषा भवति ॥ ४१ ॥

---

गौरी एव

तस्याः समुद्रा अधि वि क्षरन्तीति[6] । अलिङ्गो मन्त्र इति चेत्तस्य इत्येतदेव लिङ्गमन्यादिश्यते संबन्धाद्वचोः । तस्मान्नालिङ्गः । तस्याः गौर्याः अधि सकाशात् समुद्राः मेघा. अधिविक्षरन्ति वर्षन्ति । तेन उदकेन जीवन्ति प्रदिशश्चतस्र.।

दिक्प्रतिदिग्निवासीनि ' भूतानि ' तेन जीवन्ति । ततः क्षरत्यक्षरम् । पुनःपुनः प्रतिसंवत्सरं तत एव क्षरत्युदकं मेघद्वारेण । तद्विश्वं भूतजातम् उपजीवति । एवं सैव सर्वोदकेशाना गौरीत्यभिप्रायः ।

' उदकम् अक्षरम् ' इत्युच्यते । तत्कस्मात् । तद्धि सर्वमिदमभिव्याप्नुयत् ' क्षरति ' । सर्वमिदं संचरति । ' गौः व्याख्याता ' ( निरु० २ । ५ )। ' तस्या एषा भवति '॥ ४१ ॥

---

गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ ।
सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ( ऋ० सं० १ । १६४ । २८ )॥ गौरन्वमीमेद्वत्सं निमिषन्तमनिमिषन्तमादित्यमिति वा मूर्धानमस्याभिहिङ्ङकरोन्मननाय सृक्वाणं सरणं घर्मं हरणमभिवावशाना मिमाति मायुं प्यायते पयोभिर्मायमिवादित्यमिति वा वागेषा माध्यमिका घर्मधुगिति याज्ञिका धेनुर्धयतेर्वा धिनोतेर्वा तस्या एषा भवति ॥ ४२ ॥

---

गौरमीमेदिति । दीर्घतमस आर्षम् । महाव्रते विनियोग. ( ऐ० आ० ५ । ३ । २ ) । गौः माध्यमिका
गौः
वाक् पुत्रम् अन्वमीमेत् अनुशब्दयति महद्भिः । स्तनयित्नुशब्दैः आदित्यम् । स हि तस्या रसहरणाद्वत्सः । मिषन्तम् अनिमिषन्तम् अव्यवहितदर्शनं सर्वदा । अपि च । मूर्धानं शिरोरश्मीन् अस्य मध्यस्थानप्राप्तं प्राप्य हिङ्ङकृणोत् हिंकारेणाप्यनुशब्दयति । मातवै सर्वलोकज्ञानाय उदकाना सृक्वाणं सरणम् अनवस्थायिनमादित्यं घर्मं हरणं रसानाम् । अभिवावशाना पुनः पुनर्वाश्यमाना प्रतिसंवत्सरमेव मिमाति मायुं शब्दं करोति प्यायते च प्रकर्षेण वर्धते पयोभिः उदकैः ।

---

१ क. ख. घ. ट. °दिङ्निश°. २ क. ख. घ. ट. ठ. ड. °मिदं सचराचरं सं°; घ. °मिदं सं° सचराचर. ३ क. ख. ७ ( ४१ ). ठ. ड. °वति । इति निरुक्तभाष्ये ५ ध्याये ४१ खण्डः; ग. घ. वर्जमितोऽग्रिमाङ्को नास्ति. ४ क. ख. ८ ( ४२ ), ठ. ड. ८. ५ ग. ङ्गिति । ङ्गीं°. ६ ग. च. ज. °रश्मीन्. ७ ग. घ. स पुनर्वाविशय°. ८ क. ख. ग. ट ठ. ड. °माना वाशन्नी प्रति°.

धर्मधुक्पक्षे। गौरेव गौः अन्वमीमेत् अनुशब्दयति वत्समेव धर्सं

धर्मधुक्पक्षे अर्थः

मिषन्तं तमेवोन्मुखं पश्यन्तम् । एवमपि च प्राप्य मूर्धानम् अस्य उपघ्राय हिङ्ङित्येव शब्दं करोति। स हि गोः स्वभावः । मातरं कथं नाम य मा जानीयान्माता ममेयमिति । भूकर्णं तमेव वत्सामिमुखं सरणं हैरणं पयसाम अभिनाव-शाना पुनः पुनर्भीदयमाना प्रत्यहमेव शब्दं करोति प्राप्यायते च पयोभिः वत्सम् । अस्माञ्च या वर्धयति सा नित्यमेवमस्त्विति ।

धेनुः कस्मात्

'धेनुः (१०) धयतेर्वा'। धीयतेऽसौ वत्सेनेति। 'धिनोतेर्वा'। तर्पयत्यसावुदकेन पयसा वा। 'तस्या एषा भवति' ॥ ४२ ॥

---

**उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् । श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्रवोचम् ( ऋ० सं० १ । १६४ । २६ ) ॥ उपह्वये सुदोहनां धेनुमेतां कल्याणहस्तो गोधुगपि च दोग्ध्वेनां श्रेष्ठं सवं सविता सुनोतु न इत्येष हि श्रेष्ठः सर्वेषां सवानां यदुदकं यद्वा पयो यजुष्मदभीद्धो घर्मस्तं प्रब्रवीमि वागेषा माध्यमिका घर्मधुगिति याज्ञिका अन्याप्नत्या भवत्यघ्नीति वा तस्या एषा भवति ॥ ४३ ॥**

---

उप ह्वये सुदुघामिति । पूर्वयैव समानमार्षं विनियोगश्च । उपगम्य

धेनुः

मनसा आह्वयेऽहं स्तुतिभिः सुदुघां कल्याण-मुदकं या दुग्धे तां धेनुं तर्पयित्रीं सर्वलोकस्य एतां माध्यमिकां वाचम् । अपि च । मयैतामुक्तां सुहस्तः कल्याण-हस्तो गोधुक् इन्द्रो दोग्धु प्रक्षारयतुदकानि । अमुना प्रकारेण श्रेष्ठम् अतिशयेन प्रशस्यमेतं सवम् उदकं योऽयम् अभीद्धो घर्मो मध्यस्थानो विद्युदाख्यः असौ निरत् स सनोतु नित्य ददात्विति तं सुष्ठु प्रब्रूम । 

---

१ क. ख. घ. ट. ठ. ड. अपि च मा॰; च एवमपि॰ अपि च २ क. ख. घ. ट. ठ. ड. धर्मं दर॰, च. ॰रणन्दर धर्मं ३ ग. ज. पुनर्भीश्च॰, च पुनर्वावेश॰. ४ क. ख ८ ( ४२ ), ज. ड. ॰यति । इति निरुक्तभाष्ये ध्याये ४२ खण्डः, ग. च. यजुष्मदभीद्धो नास्ति. ७ क. ख. ट. थ. ध. ठ. ड. दोग्ध्वेनां; छ. त. दोग्धेना. ६ क. ख. ९ ( ४३ ); त द. ९. ७ ठ ड. ख्य इति. ८ ग. ॰मिति । पू॰. ९ क ख. घ. ट ठ. ड. ॰मानार्. १० क. ग. घ. ठः मार्षं॰, च. ऊन॰ ९, ज. दै॰ मा॰ अ.

घर्मधुक्पक्षे अर्थः

घर्मधुक्पक्षे । धेनुरेव धेनुः । तामुपह्वये सुदुघां सुदोहां धेनुमेनाम् अस्मिन्कर्मण्यङ्गभावमुपगताम् । होता ब्रवीति । मया चैवमुपहूतां सुहस्तः गोधुक् अध्वर्युरपि च दोग्ध्येनाम् । श्रेष्ठम् अतिशयेन प्रशस्यमेन सवम् एतत् पयउन्नयन-साविषत् सुनोतु अभ्यनुजानातु सविता । यद्धि सवित्रा प्रसूतं क्रियते तदेव साधु भवति । अभीद्धः एष घर्मो रुचितो महावीरः । स्तमधिक्रम्य प्रब्रूमः । आहरैतस्मिन् पय आसेचनायेति ।

अघ्न्या कस्मात्

'अघ्न्या' (३१) कस्मात् । सा हि सर्वदैव 'अहन्तव्या भवति'। 'अघघ्नीति वा'। सा हि पापं हन्ति यदि वाग्यदि गौः । 'तस्या एषा भवति' ॥ ४३ ॥

---

**सुयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम। अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ( ऋ० सं० १ । १६४ । ४० ) ॥ सुयवसादिनी भगवती हि भवाथेदानीं वयं भगवन्तः स्यामाद्धि तृणमघ्न्ये सर्वदा पिब च शुद्धमुदकमाचरन्ती तस्या एषापरा भवति ॥ ४४ ॥**

---

अघ्न्या

सुयवसादिति[१] । पूर्ववदार्थम् । माध्यमिका वागुच्यते । शोभन यव-समुदकमभ्यात्मीकृत्य सूर्यात् तेन भगवती धन-वती उदकेनोदकवती भव । अथ इदानीमेव त्वयि भगवत्यां वयमपि त्वदुत्सृष्टेनोदकेन भगवन्तो धनवन्तः स्याम । सा च पुनरेवं प्रतिसंवत्सरम् अद्धि तृण मेघम् । तृप्योऽसाविति तृण । तमद्धि संचूर्णय। विश्वदानीं सर्वदा यथाकाङ्क्षं पिब च सूर्यरश्म्युपहृतम् उदकम् आचरन्ती आसेवन्ती शुद्धम् अकलुषं सर्वतो मध्यस्थाने चरन्ती।

---

१ ग. अ. दोग्धेना, घ. दोग्धेनां° स्थाने २ क ख. १ (४६), ठ. ड. 'इति । इति निरुक्तभाष्ये पञ्चमाध्याये ४२ खण्ड.. ग च दर्शनि-देशो नास्ति. ३ क. ख. १० (४४ ); त द. १०. ४ ग. °हिनि . ए° ५ क. ख. घ. ड. ठ. ड. अथ पुन. इदा°; ग. न. अयथा इदा°; घ. अयथा इदा° पुन°. ६ ग. अ. संतर्प्य प्रतिमा आद्धि°; घ संतर्पं मेघं अद्धि°.

धर्मधुक्पक्षे । यवसमेव यवसम् । तज्जग्ध्वा पयस्विनी भव ।

घर्मधुक्पक्षे अर्थः.

वयमपि च त्वत्प्रत्तेन पयसा धनवन्तः स्याम । या त्वमस्माकमेवमुपकारिणी सा त्वं नित्यमाह्नि तृणमध्ये । विश्वदानीं नित्यकालं पिब च शुद्धमकलुषमुदकमाचरन्ती आसेवन्ती आ सर्वतो यथाकाममरण्ये चरन्ती ।

' तस्या एषापरा भवति ' । सा पुनः किमर्थम् । रूपतो हि पूर्वस्मिन्मन्त्रे घर्मधुक् सुतरामुपपद्यते । यतः परया वसुभिर्देवैः संबन्धान्माध्यमिकैव देवतेत्युपपादयति ॥ ४४ ॥

---

हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् । दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ( ऋ० १ । १६४ । २७ ) ॥ इति सा निगदव्याख्याता पथ्या स्वस्तिः पन्था अन्तरिक्षं तन्निवासात्तस्या एषा भवति ॥ ४५ ॥

---

हिङ्कृण्वतीति । पूर्ववदर्धादि । हिङ् इत्येवंप्रकारं शब्दं स्तनयित्नुं

अघ्न्या एव

कुर्वती वसुपत्नी वसूनामुदकानामीश्वरा । वसूनां वा आदित्यरश्मीनां मरुतां वा । वत्स आदित्यः । स यस्मानो वा रसहरण वत्सः । तम् इच्छन्ती मनसा या माध्यमिका वाक् नित्यम् अभ्यागात् सेयम् अश्विभ्यां द्यावापृथिवीभ्यां सूर्याचन्द्राभ्यां वा वर्षाय दुहां दुग्धां प्रक्षरतां पयः उदकम् । अमुना प्रकारेण प्रतिसंवत्सरं वर्धताम् उदकेनास्माकं महते सौभगाय । यथा महासौभाग्यं धनेश्वरत्वं स्यात्तथा वर्धतामिति ।

---

१ क. ख. ग. ठ. घ ततः त्व°, च. घ - त्व° तत , ठ. ड. च तत. स्वत्प्रसादेन पय°. २ ग. ज. °रन्ती सेव°, घ. °रन्तीं से° आ. ३ क. ख. १० ( ४४ ), ठ. ड. °वति । इति निरुक्तभाष्ये पञ्चमाध्याये ४४ खण्ड ; ग. घ. कर्मितोऽयं नास्ति. ४ क. ख. ११ ( ४५ ); ठ. ड. ११. ५ ग. °तीति । पू°. ६ ग ज. °दार्ध । हिङि°; च. दार्ध । हिङि° घ°. ७ ग. ज. कुर्वती, च. कुर्वती° वं. ८ ग. ज. °भ्यां व°, घ. °भ्यां च° वा. ९ ठ. 'धन' इ यतन्त्यमध्यादय पदानि नष्टानि. १० ग. °मिति वर्धयामिति, च. °मिति वर्धयामिति.

' पथ्या (३२) स्वस्तिः ' (३३) इति वक्तव्यम् । अत्र पूर्वपदं

पथ्या कस्मात् पन्था अन्तरिक्षम् । तन्निवासात् पथ्या । स्वस्तिरित्युक्तं निर्वचनम् ( निरु० ३ । २१ ) ।

यथा प्रायणीयाया यजतिप्रयोगो दृष्टस्तथा समाम्नातः ' पथ्यां स्वस्तिं पूर्वां यजति ' इति । ' तस्या एषा भवति ' ॥ ४५ ॥

---

स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति । सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ( ऋ० सं० १० । ६३ । १६ ) ॥ स्वस्तिरेव हि प्रपथे श्रेष्ठा रेक्णस्वती धनवत्यभ्येति या वसूनि वननीयानि सा नोऽमा गृहे सा निरमणे सा निर्गमने पातु स्वावेशा भवतु देवी गोप्त्री देवान्गोपायत्विति देवा एनां गोपायन्त्विति वोपा व्याख्याता तस्या एषा भवति ॥ ४६ ॥

---

स्वस्तिरिद्धिरिति । वस्तुकर्णस्यार्थम् । ' इत् ' इत्यवधारणार्थे ।

स्वस्तिः ॰ । स्वस्तिरेव हि प्रपथे अन्तरिक्षे श्रेष्ठा प्रशस्या सर्वदेवताभ्यः । रेक्णस्वती धनवती उदकेन । अभि या वाममेति । या वननीयानि उदकानि अभ्येति । तस्याः किमिति । सा नः सा अस्मान् अमा । अमेति गृहनाम ( निघ० ३ । ४ । ११ ) । गृहे वसतः अरणे अरण्ये च निर्गमने च बहिर्गृहात् पातु रक्षतु । स्वावेशा सूपचरणा भवतु अस्माकम् । देवगोपा देवी चासौ गोप्त्री चेति देवगोपा । देवान् दातॄनस्मान् गोपायत्विति वा । हविर्भिर्गोपायतु । अथवा । देवा माध्यमिका द्युस्थाना वा रश्मय एनां गोपायन्त्विति वा ।

---

१ ग. ज. पूर्वार्द्धे, च. पूर्वार्द्धे च °र्वा. २ क. ख. ११ ( ४५ ); ङ. °वति । इति निरुक्तभाष्ये ५ ध्याये ४५ खण्ड; ग. च सर्जभिरेषाङ्को नास्ति. ३ क. ख. १२ ( ४६ ), ख. ट १२. ४ ग °रिति । व°. ५ क. ख. घ. ट. ठ. ड. °कानि निन्धमभ्योति, च. °कान्यभ्ये°मय. ६ ग. ज. °मते, घ. °मने च° नै. ७ क. ख. घ. ट. ड. देवान्गोपायत्विति वा । दातृनस्मान् । किम् । सर्वस्माद्दविर्भिर्गोपायतु । अथ°; च. देवान् गोपा- दातृ॰ यन्त्विति वा. ८ च. °नस्मान् दविर्विति वा. ९ च. - हवि° कि सर्वस्मात्. १० च हवि- गोपा° वो.

' उषा ( ३४ ) व्याख्याता ' ( निरु० २ । १८ ) । 'तस्या एषा भवति ' ॥ ४६ ॥

---

अपोषा अनसः सरत्संपिष्टादह विभ्युषी । नि यत्सीं शिश्नथद्वृषा ( ऋ० सं० । ४ । ३० । १० ) ॥ अपासरदुषा अनसः संपिष्टान्मेघाद्विभ्युष्यनो वायुरनितेरपि वोपमार्थे स्यादनस इव शकटादिवानः शकटमानद्धमस्मिन्नश्मीवरमानितेर्वा स्याज्जीवनकर्मण उपजीवन्त्येनन्मेघोऽप्यन एतस्मादेव यन्निरशिश्नथद्वृषा वर्षिता मध्यमस्तस्या एषापरा भवति ॥ ४७ ॥

---

अपोषा अनसः सरदिति । वामदेवस्यार्षम् । परा च । अपासरदुषाः । उषाः अपासर्पत् । कुतः । अनसो वायोः । यदा संपिनष्टि वायुर्मेघं तदा सन्निवासिन्युषा मामप्ययं हनिष्यतीति बिभ्यत्यपसरति । नि यत्सीं शिश्नथत् । यदा निरशिश्नथत् निर्जघान निर्हन्ति वृषा वर्षिता वायुः तदा अपासरदुषाः ।

' अनो वायुरनितेः ' धातोः प्राणनार्थस्य । ' अपि वोपमार्थे स्यात् । अनस इव शकटात् । यथा शाकटिकः शकटात्केनचित्संपिष्यमाणादपसर्पेदेवं वायुना संपिष्यमाणान्मेघादपासरदुषा इति द्वितीया कल्पना ।

' तस्या एषापरा भवति ' । सा पुनः किमर्थम् । उत्तमापि ह्युषा आदित्यसंश्रयाद्भवति । इयं तु मध्यमा मेघसंश्रया वायोरेव संस्तवादिति मध्यमास्थानभावप्रायोऽस्त्युपप्रदर्शनार्थम् ॥ ४७ ॥

---

एतदस्या अनः शये सुसंपिष्टं विपाश्या । ससार सीं परावतः ( ऋ० सं० ४ । ३० । ११ ) ॥ एतदस्या अन आशेते

---

१ क. ख. १२ ( ४६ ), ड. °वति । इति निरुक्तभाष्ये ५ ध्याये ४६ खण्डः; ग. घ. वर्जमितरेष्वयं नास्ति. २ क. ख. १२ ( ४७ ); ल. द. १२. ३ ग. °दिति । वा°; ड. अपोषा । इति. ४ घ. °मानार्थे. ५ क. ख. १२ (४७), ड. ' °स्त्युपप्रदर्शनार्थम् । ४७ । ' इति नास्ति; ग. घ. वर्जमितरेष्वयं नास्ति.

सुसंपिष्टमितरदिव विपाशि विमुक्तपाशि ससारोषाः परावतः प्रेरितवतः परागताद्वेळा व्याख्याता तस्या एषा भवति ॥ ४८ ॥

---

एतदस्या अनः शय इति । विशीर्णमुदकमावेन पृथिवीं संश्रित्य अवस्थितं दर्शयन् ब्रवीति मेघम् । एतदस्याः उषा एव उषसः अनो मेघाख्यमाश्रयभूतं सुसंपिष्टं सुष्टु संचूर्णितं वायुना इतरदिव शकटानः विपाशि छिन्नसर्वपाशबन्धनम् आशेते आतत्य पृथिवीं शेते आस्ते यतः संपिष्यमाणात् ससार माध्यमिका उषाः परावतः दूराद्दूरतरं ननाशेति ।

'इळा ( २५ ) व्याख्याता ' ' ईट्टेः स्तुतिकर्मणः ' ( निरु० ८।७) इति । ' तस्या एषा भवति ' ॥ ४८ ॥

---

अभि न इळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु । उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः ( ऋ० सं० ५ । ४१ । १९ ) ॥ सिषक्तु न ऊर्जव्यस्य पुष्टेः ( ऋ० सं० ५ । ४१ । २० ) ॥ अभिगृणातु न इळा यूथस्य माता स्मदभि नदीभिरुर्वशी वा गृणातूर्वशी वा बृहद्दिवा महद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्य प्रभृतस्यायोरयनस्य ज्योतिषो वोदकस्य वा सेवतां नोऽन्नस्य पुष्टे रोदसी रुद्रस्य पत्नी तस्या एषा भवति ॥ ४९ ॥

---

१ क. ख. छ. त. दं. °येला. २ क. ख. १४ ( ४८ ), त. द. १४. ३ ग. इति । वि; ड. एतदस्या इति. ४ क. ख. ग. घ. च. ज. इला. ५ क. ख. १४ ( ४८ ), ङ. °वति । इति भाष्ये ५ अध्याये ४८ खण्डः; ग. च. पर्जन्येनोप्यवृष्ठा नास्ति. ६ क. ख. छ. त. द. इला. ७ क. ख. ङ. थ. ध. ढ. माता सर्वस्य माता स्म°. ८ क. ख. ङ. थ. ध. ढ. °नस्य मनुष्यस्य ज्यो°. ९ क. ख. १५ ( ४९ ), त द. १५.

अभि न इळेति । अत्रेरार्षम् । शक्वरी । अभिगृणातु अभिशब्द-यत्वस्मात् । कासौ । इळा । किंलक्षणा । यूथस्य माता मेघयूथस्य निर्मात्री मध्यमा । केनाभिगृणातु । नदीभिः नर्दनाभिरद्भिः । उर्वशी वा । उर्वशीति वा योऽध्यते इडेति वा सा गृणातु नः अस्मानिति अभिस्तनयतु । उर्वशी वा बृहद्दिवा गृणाना । उपमार्थे वा 'वा'शब्दो भेदापेक्षया । उर्वशीव बृहत् महत् गृणातु दिवा द्योतनवता विद्युत्सहितेनोदकसमूहेन अभ्यूर्ण्वाना सर्वमिदमभिप्रच्छादयन्ती प्रभृतस्य प्रकर्षेण संभृतस्य आयोः अयनस्य गमनशीलस्य उदकस्य समूहेन सिषक्तु सेवताम् अस्मान् ऊर्जव्यस्य पुष्टेः यवादेः अन्नस्य पोषणाय ।

रोदसी कस्मात् — 'रोदसी (३६) रुद्रस्य पत्नी' रुद्रस्य विभूतिः । 'तस्या एषा भवति' ॥ ४९ ॥

---

रथं नु मारुतं वयं श्रवस्युमा हुवामहे । आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी (ऋ० सं० ५।५६।८) ॥ रथं क्षिप्रं मारुतं मेघं वयं श्रवणीयमाह्वयामहे आ यस्मिन्तस्थौ, सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसी रोदसी ॥ ५० ॥

---

१ क. ख. ग. घ. च. ज. ट. इलेति । अ°. २ ग. ज. °णातु इति अभि°; घ. °णातु इति अभि°. ३ क. ख. ग. घ. च. ज. इला. ४ ग. ज. °मदाभि°; च. °नर्दाभि° दना. ५ ग. ज. उर्वश्यर्थे; च. उर्वश्यर्थे° पमा. ६ क. ख घ. ट. °हेन गृणाना शब्दयन्ती अ°, च. °हेम-अ° गृणाना शब्दयन्ती ७ क. ख. १५ (४९), ट. °वति । इति नैरुक्तोत्तरषट्के भाष्ये ५, ध्याये ४९ एतद्, ग. च. पर्भामितोऽयन्शो नास्ति. ८ ग ज. ट. 'मंच' नास्ति. ९ क. ट. १६ (५०); ग. ट. १६; ड. ५० इति नैरुक्तोत्तरषट्के पञ्चमाध्यायः समाप्तः.

रथं नु मारुतमिति । इत्यस्यार्षम् । आग्निमारुते विनियोगः । स्तोता ब्रवीति । नु क्षिप्रं वयं रथम् आहुवामहे आह्वयामहे मारुतं मरुत्संयुक्तं श्रवस्युं श्रवणीयं यशस्विनम् । रोदसी किमिति । आ यस्मिन् तस्थौ । यस्मिन्नातिष्ठति रेहणे रोदसी सह मरुद्भिः सहिता मरुद्भिः । रोदसी किमिति । सुरणानि सुष्ठु रमणीयानि उदकानि बिभ्रती धारयन्ती आतिष्ठति । तं वयं मेवं रथम् आह्वयामहे वर्षार्थमिति ॥ ५० ॥

---

इति श्रीजम्बूमार्गनिवासिनो भगवद्दुर्गाचार्यस्य कृतौ ऋग्वर्थायां निरुक्तवृत्तौ षोडशोऽध्यायः ।

---

+श्येनआदायस्वादिष्ठयासोममन्यतेयत्त्वादेवनत्रोर्नवोपरंमृत्यो स्त्वेर्पमित्थाभवोमहत्उदुर्ज्येयोविधातींददातुसोमंस्यराज्ञोधातोमध्यस्था- नांदेवगणाआविर्वुन्मद्भिरारुद्रासोविष्णुशमीविरूपासऊदीरतामङ्गिर- सोनःसूर्यस्येवस्तुपेच्यमथातोमध्यस्थानाःस्त्रियोदक्षस्यवार्यस्मैत्वंकि- मिच्छन्तीपार्वंकानोमदोअगोपद्वागेवदन्तीदेवींवाचमन्विदनुमतेरा- कास्मिंहंसिनीवोलिकुहूंमहमन्यमुपूर्वशीविद्युन्नयक्षिस्थेन्द्राण्यांनाहमि-

---

१ ग. °मिति। इत्या°. २ ग. ज. मारुत शार्म°, च मारुतं शर्म°. ३ क. ख. घ. ट. ङ. यस्मिन् किमिति; च. ~ कि° यस्मिन्. ४ घ. ङ. ह. °स्थौ यस्मिन्नातस्थौ यस्मि°; च. °स्थौ ~ य° यस्मिन्नातस्थौ. ५ क. ख. घ ठ. ङ. °णे गमने रो°; च. °णे ~ रो° गमने. ६ क. ख. घ. ट. ङ. तथा सह, च. ~ सह° तथा. ७ क. ट. १६ (५८); ङ. 'मिति। इति श्रीजम्बू': ग. च. वर्षमितेरग्रहो नास्ति. ८ ग. घ. ज. जम्बू०. ९ ङ. निरुक्तटीकायां निघण्टुव्याख्यानकेन सह नैरुक्तषोडशो°. १० क. ख. च. ञ. ट. °ध्यायः समाप्तः. + ङ. त. ह. एषा खण्डसूची न नास्ति. ११ ङ. श्येनो व्याख्यात आदा°. १२ ङ. ह. °त मन्येद्रि°. १३ थ. यद ग्रेवी. १४ थ. राकासिनी. १५ थ. कुहूम्नं हू°. १६ थ. विद्युत्त्रि°. १७ थ. नाहं गौरी°.

न्द्राणिगौरी[40]र्मिमायतस्याः[41]संमुद्रागौ[42]रंमीमिदु[43]पंह्वयेसू[44]यंवसा[45]द्विंक्रोण्व-
तीस्व[46]स्तिरिद्धे[47]पपोपाँ एतद्दस्या[48]अमिनइळारथं[49]नुं पञ्चाशत् ।

इति निरुक्त उत्तरषट्के पञ्चमोऽध्यायः ।

---

१ घ. 'रिद्रपो'. २ ग. इति नैरुक्ते एकादशोऽध्यायः; ङ. च. इत्येकादशो-
ध्यायः समाप्तः; ३ घ. इति नैरु० ४. 'इति० ध्यायः' नास्ति.

## अथ द्वादशाध्यायस्य

### प्रथमः पादः ।

ॐ ॥ अथातो द्युस्थाना देवतास्तासामश्विनौ प्रथमागामिनौ भवतोऽश्विनौ यद्व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्योऽश्वैरश्विनावित्यौर्णवाभस्तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकास्तयोः काल ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानुविष्टम्भमनु तमोभागो हि मध्यमो ज्योतिर्भाग आदित्यस्तयोरेषा भवति ॥ १ ॥

---

व्याख्याता मध्यस्थाना देवताः सवचनलिङ्गविशेषाः । अधुना तेनैव समाम्नायानुक्रमेण द्युस्थाना व्याख्येयाः । तदर्थं विशेषतः पुनरधिकारवचनम् । 'अथातो द्युस्थाना देवताः' इति । बहुवचनं पक्षेऽर्थवत् । द्यौरेषां स्थानमिति द्युस्थानाः । देवता व्याख्यास्यन्त इति शेषः । 'तासामश्विनौ प्रथमागामिनौ भवतः' । तौ कस्मात् । कालतो हि द्युस्थानानां देवतानां विशेषो विवक्षितः । आश्विने च स्तुतशस्त्रके कर्मणि प्रथममश्विनोः कालः संधौ । एकश्चाश्वी मध्यस्थान एको द्युस्थानो नैरुक्तानाम् । अतो द्युस्थानमध्यस्थानत्वात्तयोरश्विनोरुपन्यासः । यद्येवमेकस्य मध्यस्थाने एकस्य द्युस्थाने उपदेशः प्राप्नोति । न । एकैकस्य तयोरश्विशब्दस्य पृथग्भावेन स्तुत्यभावादश्विद्वन्द्वस्य चात्यन्तमवियोगाभ्यासत्वादिति च पृथक्स्तुत्यभावात् । सत्यप्यैवं वियोगे प्राथम्यात्प्रथमस्य समाम्नानं युक्तमिति चेन्न तत्कालेन मध्यस्थानस्य हीयमानरूपत्वाद् द्युस्थानस्य च वर्धमानरूपत्वात् अतोऽनन्तरं च द्युस्थानदेवतारूपान्तरसंस्थानादिति ।

अश्विनौ किमर्थं प्रथमं कथ्येते

द्वयोरेकत्र कथने किं कारणम्

---

१ ङ. ढ. हरिः ओम्, छ. ञ, थ. ओश्म्, प. ॐम्. २ छ. त. द. ढ. °द्युस्थानो. ३ ग. घ. ञ. ञ व्या°; प. ठ. श्रीगणेशाय नमः । व्या° ४ ग. ञ. °वचनपक्षे°. ५ घ. मध्यस्था° म. ६ च. ट. °कस्य तयोरश्वि° इत्या. ७ ग. ञ. 'अपि' नास्ति ८ ग. ञ. °मानं.

'अश्विनौ'(निघ० ५।६।१) कस्मात्। 'यद्व्यश्नुवाते सर्वम्'। केन।

अश्विनौ कस्मात्

'रसेनान्यः'। रसेनोदकेन सर्वम् व्यश्नुते व्याप्नोति। ज्योतिषैकः। 'अश्वैरश्विनावित्यौर्णवाभः'। अश्वैस्तद्वन्तौ ताविन्यौर्णवाभ आचार्यो मन्यते।

'तत्कावश्विनौ' इति विचारः। तदिति वाक्योपादाने। कावेताश्विनाविति विचारार्थः प्रश्नः। 'द्यावापृथिव्यावित्येके'। विज्ञायते हि 'तौ यौ प्रत्यक्षदेवतमश्विनाविमे एव ते द्यावापृथिव्यौ' इति। द्यौर्ज्योतिषा व्याप्नोति पृथिव्यन्नेन। 'अहोरात्रावित्येके'। अहर्ज्योतिषा व्यश्नुते रात्रिरवश्यायैः। 'सूर्याचन्द्रमसावित्येके'। सूर्यो ज्योतिषा व्यश्नुते रसेन चन्द्रमाः। 'राजानौ पुण्यकृतावित्यैतिहासिकाः'। 'अश्वैरश्विनौ' इत्येतन्निर्वचनमथास्मिन्पक्षे इतिहासे समन्वेति।

कौ अश्विनौ

'तयोः काल ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानुविष्टम्भम्'। ज्योतिषा व्यतिभिद्यमानमूर्ध्वमर्धरात्रात्तमो यदा ज्योतिरनुविष्टभ्नाति सोऽश्विनोः कालः। ततः प्रभृति संधिस्तोत्रं पुरोदयादाश्विनम्। उदिते सौर्याणि। तत्र यत्तमोऽनुप्रविष्टं ज्योतिषि तद्भागो मैध्यमस्य रूपम्। यज्ज्योतिस्तमस्यनुप्रविष्टः तद्भागं तद्रूपम् 'आदित्यः'। ताविनौ मध्यमोत्तमाविति स्वमतमाचार्यस्य। यत. समर्थनायोदाहरति। 'तयोरेषा भवति'॥ १॥

तयोः कालः

---

वसातिषु स्म चरथोऽसितौ पेत्वाविव। कदेदमश्विना युवमभि देवाँ अगच्छतम्॥ इति सा निगदव्याख्याता। तयोः समानकालयोः समानकर्मणोः संस्तुतप्राययोरसंस्तवेनैषोऽर्धर्चो भवति

---

१ क. ख. घ. ट. ज. ड. °केन सर्वं व्य°; च. 'केन 'व्य° सर्व. २ ग. ज. द्यावाश्वि°; च. °द्यावाश्वि वा. ३ क. ख. घ. ट. ठ. ड. मध्यमः। तन्मध्यमस्य, च °तो मध्य° म्यमः। तन्म°. ४ ठ भवति। इति निरुक्ते निघण्टवपञ्चाध्याय्याः द्वादशाध्याये प्रथमः खण्डः, ट. °वति। इति निरुक्तटीकायां निघण्टपञ्चकेन सह सतदशाध्याये प्रथमः खण्डः; क ग. ज च. वर्गनिर्देशो नास्ति. ५ ट. ख. घ. ट. ड. °वसातिषु स्म चरथो वसतेर्वा गमनार्थे वसन्ते स्म इति मा तयो वसेयां चरतेर्वा पेत्वाविव। अवि वृषदंश मुगमेगोला र.°.

वासात्यो अन्य उच्यते उषःपुत्रस्त्वान्य इति तयोरेषापरा भवति ॥ २ ॥

---

वसातिषु रैमेति । उपजातदेवतादर्शनचक्षुरसौ तेषु रात्रिपर्यायेषु संधौ

अश्विनौ

प्राप्ते सहसैवाश्विनौ दृष्ट्वा मर्षन्नब्रवीति । वसातिषु रात्रिषु । तासु हि प्राणिनो वसन्ति । किं तावितीति । चरथो युवाम् । कथम् । असिताविव पेत्वौ । कृष्णाविव मेघौ समानरूपौ । उषसि कथमपि मया लक्षितौ । यतो ब्रवीमि[3] । कदेदमश्विना युवम् । कदेदमस्मत्कर्म प्रति ये देवा आगतास्तान्प्रति हे युवामश्विनौ आगच्छतम् आगतवन्तौ स्थः ।

तयोः कालः कर्म च समाने सूक्तानि ऋचश्च प्राय. स्तुतिरूपाणि असंस्तवरूपोऽर्धर्चः

' तयोः ' अश्विनोः ' समानकालयोः ' । उभयोरपि हि तयोरूर्ध्वमर्धरात्रात्काल इति समानः कालः । ' समानकर्मणोः ' । उभयोरपि तयोरेकं कर्म । तिरोअह्न्याः सोमा आश्विनश्च द्विकपाल. । ' संस्तुतप्राययोः ' । प्रायेण हि तयोर्बाहुल्येन संस्तव एव । तयोः पुनः ' असंस्तवेनैषोऽर्धर्चो भवति ' ।

नायमर्धर्चोऽश्विपर इति केचित्

नैन्वस्यामृचि वसातिषु[6] स्म चरथ इति वसातयो हि जनपदा अपि प्रसिद्धाः । तदधिपती राजानौ पुण्यकर्माणावश्विनौ तद्वन्तावितीति शक्यते कल्पयितुम् । तद्यथा । वासात्यौ स्वदेशाधिपती कौचिद्राजानौ बहुस्वौ पुण्यकृतौ यज्ञकर्मणि देवान्प्रति गतौ केनचिदुच्येते । यौ युवां वसातिषु जनपदेषु नित्यमसिताविव पेत्वौ समानवेषौ चरथस्तौ युवामिदं देवस्थानं प्रति ये देवा वर्तन्ते तान्प्रति कदा हे अश्विनौ युवामागच्छतमागतवन्ताविति । मा भूदेषा मन्त्रार्थयोजनेत्यत आह । ' वासात्यो अन्य उच्यत उष.-

---

१ ग. र्भेति । उ°; ज. रमेति । उ°. २ क. ख. घ. ट. ठ. ड निव°. ३ क. ख. घ ट ठ. ड. °वीमि. ४ ग. ज. °मानः का°. ५ ग. ज ' ननु ' नास्ति. ६ ग. ज. 'तिषु स्म च', 'तिषु स्म च' पु स्त.७ क. ख. घ. ट.ठ. ड. पुण्यकृतौ राजानौ. ८ क. ख. घ. ट. ट. ड युवं मागतव°. ९ क. ख. घ. ट. ठ. ड. °स्योऽन्य°.

अश्विपरोऽर्थः

पुत्रस्तवान्य इति ' । एको वाताम उष्यत एकश्च उषसः पुत्र इति । एवमेतस्मिन् भिन्नस्तुतावर्धर्चे उषसः पुत्रेण सूर्येण सह समानस्थानादसंशयं मध्यमो वासात्यो रात्रेः पुत्र इति ।

' तयोरेषापरा भवति ' । सा पुनः किमर्थम् । मध्यमोत्तमावश्विनाविमस्यैवार्थस्य दृढतायै स्फुटं यदेतस्यामेतत्परस्यामृचि ॥ २ ॥

---

इहेह जाता समवावशीतामरेपसा तन्वा३ नामभिः स्वैः । जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे ( ऋ० सं० १ । १८१ । ४ ) ॥ इह चेह च जातौ संस्तूयेते पापेनालिप्यमानया तन्वा नामभिश्च स्वैर्जिष्णुर्वामन्यः सुमहतो बलस्येरयिता मध्यमो दिवोऽन्यः सुभगः पुत्र ऊह्यत आदित्यस्तयोरेषापरा भवति ॥ ३ ॥

---

इहेह जातेति । अगस्त्यस्यार्षम् । प्रातरनुवाकाश्विनयोर्विनियोगः ( आश्व० श्रौ० ४ । १५ ) । हे अश्विनौ युवामुच्येथे । इहेह जातौ

अश्विनौ

इह च मध्यस्थाने इह च द्युस्थाने जातौ समवावशीतौ संस्तूयेथे । केन । अरेपसा तन्वा अपापया तन्वा यथासंकल्पस्पृष्टया नामभिः स्वैः । परमनाश्रित्य यानि स्वैर्निमित्तानि तैः । किंच । जिष्णुर्वामन्यः । नित्यमेव जेता युवयोरन्यः । सुमखस्य सूरिः सुमहतो बलस्येरयिता शत्रुषु । स च नान्यो मध्यस्थानादिति मध्यस्थानः । दिवो अन्यः सुभगः पुत्रः सुभगः सुधनः ऊहे उह्यते वायुना नित्यम् । स च नान्यः सूर्यादित्येवमत्रापि मध्यमोत्तमाविति ।

---

१ क. ख. घ. ट. ठ. ड. °मानःशाख्या°. २ ट. ड. °मृचि । इति निरुक्तभाष्ये द्वादशाध्याये द्वितीयः खण्डः; क. ख. ग. घ. यर्भमिनरेप्यन्तो नास्ति. ४ ट. त. सुमहतो महतो बल°. ५ क. ख. ट. त. द. दिवो अन्य°. ६ क. ख. ट. घ. थ. ठ ड. उह्य. ७ ग. 'तेति । अ°. ८ क. ख. घ. ट. ठ. ड. °ल्पनया; घ. °स्पृष्ट°. ९ क. ख. घ. ट. ठ, ड. संस्तुतिति°; घ. स्त-ति° स्तुति. १० क, ख. घ. ट. ठ ड. उह्य°.

' तयोरेषापरा भवति ' । सा पुनः किमर्थम् । संस्तुतप्रायावेतौ समानकालौ समानकर्माणावित्युक्तं तदुपप्रदर्शनार्थम् ॥ ३ ॥

---

प्रातर्युजा विबोधयाश्विनावेह गच्छताम् । अस्य सोमस्य पीतये ( ऋ० सं० १ । २२ । १ ) ॥ प्रातर्योगिनौ विबोधयाश्विनाविहागच्छतामस्य सोमस्य पानाय तयोरेषापरा भवति ॥ ४ ॥

प्रातर्युजेति । मेधातिथेरार्षम् । प्रातरनुवाके विनियोगः ( आश्व० श्रौ० ४।१५ )। हे स्तोतः यावेतौ प्रातर्युज्येते तौ एव हविषा स्तुत्या च । तावेतौ अश्विनौ विरप्शाभिः स्तुतिभिरस्मदर्थं विबोधय । विबोधितौ च त्वया इह कर्मणि आगच्छताम् अस्माकम् अस्य सोमस्य पीतये पानाय ॥

' तयोरेषापरा भवति ' । सा पुनः किमर्थम् । नैवानयोरन्यस्मिन् काले इज्यास्ति । यद्यपि क्रियेतानिज्यैव सेति सुतरां परया संस्तवं कालं चोपप्रदर्शयति ॥ ४ ॥

---

प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम् । उतान्यो अस्मद्यजते वि चावः पूर्वःपूर्वो यजमानो वनीयान् ( ऋ० सं० ५ । ७७ । २ ) ॥ प्रातर्यजध्वमश्विनौ प्रहिणुत न सायमस्ति देवेज्या अजुष्टमेतदप्यन्योऽस्मद्यजते वि चावः पूर्वःपूर्वो यजमानो वनीयान्वनयितृतमस्तयोः कालः सूर्योदयपर्यन्तस्तस्मिन्नन्या देवता ओप्यन्त उषा वष्टेः कान्तिकर्मण उच्छतेरितरा माध्यमिका तस्या एषा भवति ॥ ५ ॥

---

१ ठ ड. °नार्थम् । इति निरुक्तभाष्ये पञ्चमाध्याये तृतीयः खण्डः; क. ख. ग. घ. पुस्तकेष्वयं पाठो नास्ति. २ ग. °जेति । मे°. ३ ठ ड. °यति । इति निरुक्तभाष्ये द्वादशाध्याये ४ खण्ड., क. ख. ग. घ. पुस्तकेष्वयं पाठो नास्ति. ४ क. ख. ठ. ड. °ष्वन्यो अस्म°. ५ ठ. ड. उच°.

'प्रातर्यजध्वमिति । अग्नेरार्षम् । प्रातरनुवाके विनियोगः ( आश्व० श्रौ० ४ । १५ ) आश्विने च ( आश्व० श्रौ० ६ । ५ ) । हे स्तोतारो यूयमुच्यध्वे ।

**तौ एव**

तौ अश्विनौ प्रातः एव यजध्वम् । कथमिति । यतो ब्रवीमि । प्रहिणोत प्रकर्षेण तौ प्रति स्तुतीर्हवींषि च गमयतेति । किमित्येवं ब्रवीति प्रातर्यजध्वमिति । इतो यस्मात् न सायमस्ति देवया: । अनयोर्देवयोर्न सायमस्ति इज्या । यद्यपि कथंचित्स्यात् अजुष्टम् अनासेवितं च तदश्विभ्यां कर्म । उतान्यो अस्मद्यजते । अपि च अनादृते त्वयि अन्यैः अस्मत्त एतावश्विनौ यजते । वि च आवः । व्यावयति च तर्पयति हविर्भिः । पूर्वः पूर्वो यजमानः प्रथमः प्रथमो यजमानो वनीयान् वनयितृतमः संभक्तृतमः आदृततमोऽत् । तस्यैव हविरासेवेते अश्विनौ नेतरस्येति ।

**आश्विने काले अन्यासां देवतानामावापः**

'तयोः कालः सूर्योदयपर्यन्तः' । 'प्रकाशीभावस्यानु विष्टम्भम्' ( निरु० १२।१) इत्यतः कालप्रभृति सूर्योदयपर्यन्तस्तयोः कालः । तत परं यागकाल । ततः किम् । 'तस्मिन्नन्या देवताः' । तस्मिन् स्तुतिकालेऽन्या देवता आश्विने शस्त्रे याः स्तुतिं लभन्ते ताः 'ओप्यन्ते' तासामावापस्तत्कालस्तुतिप्रतिलम्भे इति । तत्र तावदुषाः

**तासु उषाः प्रथमा**

प्रथममोप्यते । तद्देवतानि सूक्तानि शस्यन्ते । 'उषा ( २ ) वष्टेः कान्तिकर्मणः' । 'वश कान्तौ' ( धा० २ । ७० ) इत्यस्य । यच्चोक्तम् 'उच्छतीति सत्याः'

**उषाः कस्मात्**

( निरु० २ । १८ ) इति तद्देदं विकल्पेन द्युस्थानायाः । या पुनः 'इतरा माध्यमिका' उषा न तस्या विकल्पः । किं तर्हि । 'उच्छतेः' एव सा विवासनार्थस्य । उदकानि विवासयति विवास्यते वा मेघान्मध्यमेनेति । 'तस्या एषा भवति' ॥ ५ ॥

---

१ ग. ज. प्रातरेतावश्विनौ य°; ष. प्रातरेतावश्विनौ य°. २ क. ए. घ. ट. ठ ढ. 'च' नास्ति. ३ ग. ज. °भ्योऽध्वरम°. ४ घ. ठ. °ततवत्. ५ ग. ज. °सेविनौ श्विनो, च. सेविनोऽश्वि° ते अ. ६ ग. ज. उप्य°, ष. उप्य° ओ. ७ ग. च. ज. °थमोप्य°. ८ ठ. ढ. °थाने । इति निरुक्तभाष्ये ६ ऽध्याये ५ खण्डः; क. ख. घ. ग. वर्गसमाप्तिसूचकाङ्को नास्ति.

उपस्तचित्रमा भरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहे (ऋ० सं० १ । ९२ । १३ )॥ उपस्तच्चित्रं चायनीयं मंहनीयं धनमाहरास्मभ्यमन्नवति—येन पुत्रांश्च पौत्रांश्च दधीमहि तस्या एषापरा भवति ॥ ६ ॥

---

उपस्तचित्रमा भरेति । गोतमस्यार्षम् । प्रातरनुवाके ( आश्व० श्रौ० ४ । १५ ) आश्विने ( आश्व० श्रौ० ६ । ५ ) च विनियोगः । हे उषः त्वदस्माकं चित्रं चायनीयं धनम् आहर त्वं येन त्वत्प्रत्तेन वयं पुत्रांश्च पौत्रांश्च अविच्छेदेन तृप्तान् दधीमहि ।

उषः

' तस्या एषा परा भवति ' । सा पुनः किमर्थम् । पूर्वस्यामृचि चित्रं धनमाहरेत्युक्तम् । तच्च पुनरुभयोरप्युषसोरविशिष्टम् । विशिष्टं तु परस्यामुत्तमलिङ्गं ' पूर्वे अर्धे रजसो भानुमञ्जते ' इति । अतः परोदाह्रियते ॥ ६ ॥

---

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते । निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ( ऋ० सं० १ । ९२ । १ ) ॥ एतास्ता उषसः केतुमकृषत प्रज्ञानमेकस्या एव पूजनार्थे बहुवचनं स्यात्पूर्वेऽर्धेऽन्तरिक्षलोकस्य समञ्जते भानुना । निष्कृण्वाना आयुधानीव धृष्णवः । निरित्येष समित्येतस्य स्थाने एमीदेषां निष्कृतं जारिणीवेत्यपि निगमो भवति । प्रतियन्ति गावो गमनादरुषीरारोचनान्मातरो

---

१ छ. त द. 'त्स्वचायनीयं धन°. २ ग. 'रेति । गो°. ३ ग. ज. °वाके वि°; घ. °वाके ~ वि° आश्विने च. ४ क. ख घ. ट. ट. ड. उषः वाजिनीवति _ त°; च. उषः ~त° वाजिनीवति. ५ ट. ड. °धने । इति निरुक्तभाष्ये ६ ध्याये ६ खण्डः; क. ख. ग ज. चर्मभितरेऽन्द्रो नास्ति. ६ क. ख. ह. °स्पूर्वे अर्धे अन्त°; त. °स्पूर्वे अन्त°. ७ क. ख छ. ग. ड. एधाने । दधी°.

